UGC JOURNAL NO-40960 ISSN-0974-8946

अनुसन्धान-प्रकाशन-विभागीया

**त्रैमासिकी शोध-पत्रिका**

# शोध-प्रभा

**(A REFEREED QUARTERLY RESEARCH JOURNAL)**

**४३ वर्षे प्रथमोऽङ्कः ( जनवरीमासाङ्कः ) २०१८ ई०**

प्रधानसम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**

कुलपतिः

सम्पादकः

**डॉ० शिवशङ्करमिश्रः**

सहसम्पादकः

**डॉ० ज्ञानधरपाठकः**




प्रकाशन-स्थलम्

**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

(मानितविश्वविद्यालयः)

**नवदेहली-११००१६**

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
## अनुसन्धान-प्रकाशन-विभागीया शोध-पत्रिका

- ❖ एषा त्रैमासिकी शोध-पत्रिका।
- ❖ अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।
- ❖ अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।
- ❖ अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।
- ❖ अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।
- ❖ प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।
- ❖ अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते। प्रकाशितशोधसामग्री लेखकस्यास्ति अतः लेखस्य मौलिकतादिविषये सम्पूर्णं दायित्वं लेखकस्य भविष्यति न तु सम्पादकस्य न वा प्रकाशकस्य।
- ❖ पत्रिकासम्बद्धन्यायालयीयविवादविषये दिल्लीन्यायालयक्षेत्रमेव परिसीमितमस्ति।
- ❖ अस्याः वार्षिकसदस्यताराशिः रु. १५०.०० पञ्चवार्षिकसदस्यताराशिः रु.७००.००, आजीवन-सदस्यताराशिः रु. १५००.००।। सदस्यताराशिः **कुलसचिव, श्रीलालबहादुरशास्त्रीराष्ट्रिय-संस्कृतविद्यापीठ,** नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः।
- ❖ पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# नैवेद्यम्

**ऋचोऽक्षरे परमे व्योमन् यस्मिन् देवा अधिविश्वे निषेदुः।**
**यस्तन्न वेद किमृचा करिष्यति य एतद्विदुस्त इमे समासते।।**

श्रुतिरियमक्षराख्ये सर्वप्रपञ्चोत्पत्तिस्थितनियमनसामर्थ्यवति परमतत्त्वे सुधास्यन्दप्रवाहस्य समवायेन अधिसामर्थ्यमवबोधयति। किञ्च स एव अक्षरब्रह्मणो महिमा सर्वमपि वस्तुजातं स्वहृदयोद्योगस्वभावस्वातन्त्र्येण तत्तदनितरसाधारणसामर्थ्येषु प्रतिष्ठापयति। इयमेव दशा बहिर्मुखप्रवृत्तिमतां दूरे सती अन्तर्मुखानां स्वस्वरूपेण सायुज्यं प्रकल्पयति। एषैव तस्याक्षरब्रह्मणः आद्या-प्रज्ञा-कला-समरसा-अनुभूतीत्यादिपदेन व्यपदिश्यते। कलेत्यस्य विवरणमपि कलयतीति कला, अर्थात् कलनात्मककृत्यकारिणी अनाश्रिताख्या पराशक्तिरिति कथ्यते। इयमेव कला दर्पणप्रतिबिम्बवद्यदा बहिरुल्लसति तदा क्षेपः, यदा तु स्वाभेदेन परामृशति तदा सर्वविधवैचित्र्यपूर्णचमत्कारकृतौ जनिसामर्थ्यं विदधाति। आगमोऽपि समर्थयति भावाभिव्यक्तिमिमाम्। तदेवोक्तम्-

**पुरुषे षोडशकले तामाहुरमृतां कलाम्। इति।**

व्याकरणदृष्ट्या अपि कला इति शब्दः नैकान् अर्थान् विशिनष्टि। तदेव धातवः भवन्ति कल् क्षेपे, कल् गतौ, कल् सङ्ख्याने, कल् शब्दे ज्ञाने प्राप्तौ च। इयमेव कला शिल्पादिकं मायाप्रकृत्याद्युपादानकारणवर्गमपेक्ष्यैव स्वस्मिन् मुकुरे प्रकाशैकात्म्येन विचित्रमपि पदार्थजातं विस्फारयति।

इमां कलां प्रणयिनीं कृत्वा उदासीनोऽपीश्वरः तत्तत्समुदाचारप्रवर्तनेषु आत्मनमुपस्थापयति। एतेन कलया समन्विताः प्रतिभाविलक्षणाः जनाः क्षेपाधिष्ठितस्य प्रपञ्चजालस्य पारे गत्वाऽपि तन्मर्मविदो भूत्वा लोकोत्तरसर्जनासु कृतकल्पाः प्रभवन्ति। अत्रापि न तेषां सामर्थ्यच्युतिः, न कुत्रापि विपथेषु समावेशः। परं स्वविवेकमासाद्य लोके प्रवर्तिता अपि सर्वथैव आत्मानमसम्पृक्तमेवावतिष्ठन्ते। इम एव महापुरुषपदवीं लभन्ते, मन्येऽहं संस्कृताध्ययनस्य इदमेव सर्वव्यवच्छेद्यं फलम्, अत एवेदं नान्यत्रोपलभ्यते। विद्यापीठसदृशसंस्थानां नूनं भवति कर्तव्यमिदं यदेवम्भूता अस्माकं छात्रा अद्यत्वेऽपि स्युः, तदर्थमेव वाक्प्रवाहसंरक्षितप्राक्तननूतनाभिनिविष्टसमुदीरित- ऋषिवचः सङ्कलय्य प्रेरणायै उद्भूततया समुपलब्धं भवेत् किमपीति। तदेव प्रकृतेऽपि अङ्के **"ब्रह्मसिद्धान्त में रसभेदविमर्श"**, **"श्रीमद्भागवते पारिभाषिकशब्दानां विवेचनम्"**, **"उपनिषत्सु वाग्विद्योपासना"**, **"भारतीयसंस्कृत्यां सामञ्जस्यसूत्राणि"**, **"सांख्यदर्शने तत्त्वविवेचनम्"**, **"ब्रह्मसिद्धान्त में कर्मक्षणिकता एवं कर्मबन्धविमर्श"** इत्यादि शीर्षकोपनिबद्धानां शोधप्रविधिपूर्णकलेवराणां निबन्धानां समावेशो वर्तते। एष्वेभिस्तत्तद्विषयतत्त्वनदीष्णैः पारेशतं ग्रन्थजातं विमृश्य अपूर्वैवाभिव्यक्तिः प्रकल्पिता। नूनमेव साद्यतनशोधपरम्पराप्रवीणानां जिगमिषूणाञ्च प्रभूतं पाथेयमित्यहम्मन्ये। तेनैव अस्याः शोधपत्रिकायाः प्रकामं साफल्यमुखं सामर्थ्यमपि जीवति। तदर्थमहमपि वाग्देवतानुग्रहपूरं कारुण्यं भवेदत्रेति हेतोः तामेव नतिततिभिः बहुधा अन्तर्विभावय इति।

**प्रो. रमेशकुमारपाण्डेयः**
कुलपतिः

# सम्पादकीयम्

विश्ववन्द्यस्य जगद्गुरुपदे पूर्वं प्रतिष्ठितस्य सर्वोपकारकस्यास्य भारतस्य परिव्राजिका वर्तते काचित् महनीयोत्तमा परिपालनपरादर्शभूमिः। या च सततं परिपोषयति स्वीयपरिपालकान् ज्ञानगौरवतत्त्वेन। भारतीयसमाजे प्रसिद्धासु-मानसिकशारीरिकप्रभृतिसाधनासु सर्वप्रथमत्वमाधाययति आध्यात्मिकता। इमामेव मनसि धारयन्तः चिन्तनपरायणाः सर्वेऽपि तत्त्वशीलनपराः जनाः इह जगति नूतनचिन्तनाय तत्पराः अवलोक्यन्ते। तैः एव सततं व्यवहारयोग्या विचारसागरपूरिता काचिद् अभूतपूर्वा लेखावलिः सज्जीक्रियते, यस्याः प्रयोगेण राष्ट्रस्यास्य मतोपस्थापनप्रक्रिया दृढतां समालम्बते। आरम्भादेव भारतम् उदात्तचिन्तनेनैव सम्पूर्णं विश्वं परिपोषयति आह्लादयति च। अत्र हि विद्वांसः ज्ञानराशिं प्राकाशयन्, किन्तु न कदापि स्वीयनाम-स्थानव्यक्तिपक्षपातादीनदर्शयन्। अनेनैव विचारनैर्मल्यं सुतरां विवेचनाशक्तेः अवगमश्च सहजतया स्फूर्यते। साम्प्रतं देशोऽयं नूतनक्रान्त्या किमपि असाधारणम् अतुलनीयं विश्वोपयोग्यं चिकीर्षितुं प्रयतते। तत्र अनुसन्धानचिन्तनप्रचारपराणाम् आचार्याणां भूमिका दृढीयसी दरीदृश्यते। इमामेव भूमिकां समाजाय दित्सति पत्रिकेयम्।

इयं पत्रिका कार्यसामर्थ्यवर्धनविधिं समाजस्यावश्यकतां संस्कृतोपयोगत्वं च विवक्षति। एकत्र अनुसन्धातृणां ज्ञानं प्रकाशपरायणं चिकीर्षति अपरत्र छात्राणां जिज्ञासां विवर्धयति। न केवलमिदं समाजाय एवं महत्त्वं भजतेऽपितु समस्तेऽस्मिन् जगति ये केऽपि वर्तन्ते समेषामेव चिन्तनशैलीं परिष्करोति। अस्याः स्वरूपसंवर्धनाय विद्वत्समवायः सुतरां साहाय्यं विदधाति इत्येतदर्थं सर्वेभ्यो विद्वद्भ्यो भूयो भूयः प्रदीयन्ते स्वागतवचांसि।

विश्वविद्यालयानुदानायोगेन स्वीकृतासु सन्दर्भितशोधपत्रिकास्वन्यतमा श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्य त्रैमासिकी शोधपत्रिका ''शोधप्रभा''। इयं विगतेभ्यः द्विचत्वारिंशद्वर्षेभ्यः नैरन्तर्येण मौलिकोत्कृष्टान्वेषणान्वितशोधपत्रप्रकाशनपरायणा अनुसन्धानक्षेत्रे विशिष्टं स्थानं बिभर्ति। पत्रिकेयं संस्कृतविदुषामनुसन्धित्सूनां छात्राणाञ्च चिन्तनप्रकर्षप्रकाशनाय अनुद्घाटितज्ञानवैभवस्योद्घाटनाय महोपकारिकेति मे दृढीयान् विश्वासः।

शोधप्रभायाः प्रकृतेऽस्मिन्नङ्के नैकविधविषयगाम्भीर्यमण्डिताः चतुर्दशशोधनिबन्धाः प्रकाश्यन्ते। प्रखरप्राञ्जलप्रतिभासम्पन्नैः नदीष्णैः सुधीभिः अनुसन्धानपद्धतिमाश्रित्य तत्तद्विषयेषु गवेषणापूर्वकं मौलिकमपूर्वञ्चान्वेषणमनुष्ठितम्। अनुसन्धानपथि प्रवृत्तानामाचार्याणामनुसन्धातृणाञ्च प्रतिभाप्रगल्भेन शोधप्रभायाः 'प्रभा' सर्वत्र विलसत्विति कामयानोऽहं निकषधिषणापूरितविषयवस्तुजातस्य प्रकाममुद्बोधनाय सम्प्रार्थये सरस्वतीसपर्यापरान् सुमनसः मनीषिणः।

**डॉ. शिवशङ्करमिश्रः**
सहाचार्यः, शोधप्रकाशनविभागस्य

# विषयानुक्रमणिका

## संस्कृतविभागः



## हिन्दी विभाग



## English Section

ISSN - 0974-8946 **शोधप्रभा**
**जनवरी-मार्च 2018** वर्ष: 43, द्वितीयाङ्क:

# श्रीमद्भागवते पारिभाषिकशब्दानां विवेचनम्

**डॉ. मखलेशकुमार:**

संस्कृतविद्यायां वेदा: अनादिकालत: मूर्ध्नि विराजन्ते इति निर्विवादम्। ऋषय: मन्त्रद्रष्टार: इति वचनेन वेदानामपौरुषेयत्वं सिद्धमिति। एतादृशानां भगवत: नि:श्वासभूतानां वेदानां विस्ताराय स्वयं भगवान् नारायण: व्यासरूपेणावतीर्य पुराणानि भूमौ प्रकाशयामास। तदुक्तं ब्रह्मपुराणे-

**विस्ताराय तु वेदानां स्वयं नारायणः प्रभुः।**
**व्यासरूपेण कृतवान् पुराणानि महीतले।।**[१]

संस्कृतस्य विपुले वाङ्मये पुराणानां बहु महत्त्वं विद्यते। पद्मपुराणे एतेषां पुराणानां सर्वलोकातिशायित्वं सर्वविधज्ञानोपपादकत्वं, ब्रह्मणा प्रथमस्मृतत्वञ्च सुप्रकाशितम्। तद्यथा-

**पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्।**
**उत्तमं सर्वलोकानां सर्वज्ञानोपपादकम् ।।**[२]

मत्स्यपुराणमपि वचनमेतद् समर्थयति-

**पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्।**
**नित्यं शब्दमयं पुण्यं शतकोटिप्रविस्तरम्।।**[३]

वेदवत् पुराणानामपि भगवत: नि:श्वासभूतत्वं बृहदारण्यकोपनिषदि कथितम्। तद्यथा-

**अरेऽस्य महतो भूतस्य निःश्वसितमेतद् ऋग्वेदो यजुर्वेदः।**
**सामवेदोऽथर्वाङ्गिरस इतिहासं पुराणं विद्या उपनिषदः।।**[४]

अङ्गैः सहितानां वेदानां सर्वेषामुपनिषदामभिज्ञोऽपि यावत्पुराणानां ज्ञानं न प्राप्नोति तावद् स विचक्षणो भवितुं नार्हति। तदुक्तं पद्मपुराणे-

---

* सहाचार्य: (पुराणेतिहास:), राष्ट्रियसंस्कृतसंस्थानम्, (मा.वि.), श्रीसदाशिवपरिसर:, पुरी

१. ब्रह्मपुराणे-१.१५
२. पद्मपुराणे -१-१४
३. मत्स्यपुराणे-३.३
४. बृहदारण्यके.२.४.१०

**यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः।**
**न चेत्पुराणं संविद्यान्नैव स स्याद्विचक्षणः।।**[१]

पुराणानां महत्त्वमुद्घोषयन् न्यायदर्शनभाष्ये वात्स्यायनोऽपि लिखति यत्, य एव मन्त्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च ते खल्वितिहासपुराणस्य धर्मशास्त्रस्य चेति विषयव्यवस्थापनाच्च प्रमाणम्। यज्ञो मन्त्रब्राह्मणस्य, लोकवृत्तमितिहासपुराणस्य, लोकव्यवहारस्थापनं धर्मशास्त्रस्य च विषयः।

उपर्युक्तैः वचनैः सिद्धमिति यत् पुराणविद्यापि वेदवदतिप्राचीना प्रामाणिकी समादरणीया च वर्तते। अनया विना वैपश्चित्यस्य कल्पना व्यर्था निर्मूला च भविष्यति। संस्कृतविद्यायाः क्षेत्रं बहुविस्तृतं वर्तते। भारतीयसंस्कृतौ चतुर्दशविद्यास्थानानि अष्टादशविद्यास्थानानि च परिगणितानि सन्ति।

विष्णुपुराणे विद्यागणनाप्रसङ्गे कथितं यत् ऋग्यजुर्सामाथर्वेति चत्वारः वेदाः, शिक्षा-कल्प-निरुक्त-व्याकरण-छन्द-ज्यौतिषमिति षड् वेदाङ्गानि, मीमांसा-न्याय-पुराण-धर्मशास्त्रमिति चतुर्दशविद्यास्थानानि भवन्ति। एतासु आयुर्वेद-धनुर्वेद-गान्धर्ववेदेति त्रयः उपवेदाः एवमर्थशात्रञ्चेति मेलनेन एताः अष्टादश विद्याः भवन्ति। तद्यथा-

**अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।**
**पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश।।**

**आयुर्वेदो धनुर्वेदो गान्धर्वश्चैव ते त्रयः।**
**अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव ताः।।**[२]

भागवते तु उपवेदान् विगणयन् अर्थशास्त्रस्य स्थाने स्थापत्यस्य नाम कथितम्-

**आयुर्वेदं धनुर्वेदं गान्धर्ववेदमात्मनः।**
**स्थापत्यं चासृजद् वेदं क्रमात्पूर्वादिभिर्मुखैः।।**[३]

महर्षिः याज्ञवल्क्यस्तु चतुर्दशविद्यागणनायां पुराणानां प्राथम्यमुद्घोषयति। तद्यथा-

**पुराणं न्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः।**
**वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश।।**[४]

एवं विवेचनेन स्पष्टं यद् संस्कृतविद्यासु पुराणानां महत्वपूर्णस्थानं वर्तते। सर्वप्रथमं देवलोके शतकोटिप्रविस्तरं नित्यं शब्दमयं पुराणमासीत्। प्रतिद्वापरं भगवान् एव व्यासः भूत्वा पुराणमेकं चतुर्लक्षप्रमाणेन अष्टादशधा कृत्वा प्रकाशयति। श्रीमद्भागवते अष्टादशपुराणानि परिगणितानि । तद्यथा-

---

१. पद्म.पु.सृ.ख. २.५१)
२. वि.पु.३.६.२८-२९)
३. श्रीमद्भा. ३.१२.३८)
४. याज्ञ.स्मृ. १.३)

**ब्राह्मं पाद्मं वैष्णवं च शैवं लैङ्गं सगारुडम्।**
**नारदीयं भागवतमाग्नेयं स्कान्दसंज्ञितम्।।**

**भविष्यं ब्रह्मवैवर्तं मार्कण्डेयं सवामनम्।**
**वाराहं मात्स्यं कौर्मं च ब्रह्माण्डख्यमिति त्रिषट्।।**[१]

अष्टादशपुराणेषु श्रीमद्भागवतमहापुराणस्य स्थानं पुराणतिलकरूपेण वर्तते। सृष्ट्यादौ भवभीताय नाभिपङ्कजे ब्रह्मणे पुराणमेतद् भगवता कारुण्याद् प्रकाशितम्। तदुक्तं भागवते-

**इदं भगवता पूर्वं ब्रह्मणे नाभिपङ्कजे।**
**स्थिताय भवभीताय कारुण्यात् सम्प्रकाशितम्।।**[२]

सर्वेषु शास्त्रेषु पारिभाषिकाः शब्दाः भवन्ति। पारिभाषिकशब्दानामर्थावबोधस्तु तत्तच्छास्त्रानुसारेणैव सुकरो भवति। पुराणसंहितायाः निर्माणं अष्टादशपुराणानां प्रणयनमिति कार्यद्वयं विद्यते। आख्यानोपाख्यानगाथाकल्पशुद्धिभिः पुराणार्थविशारदाः पुराणसंहितां रचितवन्तः। तर्हि कः विद्यते पुराणसंहितायाः कर्ता इति जिज्ञासायां विष्णुपुराणानुसारं व्यासः एव प्रतिभाति। यतो हि तस्य व्यासस्य प्रख्यातः शिष्यः रोमहर्षणः सूत आसीत्। एतस्मै सूताय महामतिः व्यासः संहितां ददौ। तदन्तरं सूतोऽपि संहितां रचयामास। तस्य सूतस्य सुमतिः अग्निवर्षा मित्रायुः शांसपायनः अकृतव्रणः सावर्णिश्चेति षट् शिष्याः अभवन्। एतेषु षट्शिष्येषु शांसपायनः सावर्णिः अकृतव्रणश्चापि स्व-स्वसंहितां निर्मितवन्तः। एतासां तिसृणामाधारभूता सूतसंहिता रोमहर्षणेन निर्मिता एव आसीत्। तद्यथा-

**प्रख्यातो व्यासशिष्योऽभूत्सूतो वै रोहर्षणः।**
**पुराणसंहितां तस्मै ददौ व्यासो महामतिः।।**

**सुमतिश्चाग्निवर्चाश्च मित्रायुश्शांसपायनः।**
**अकृतव्रणसावर्णी षट् शिष्यास्तस्य चाभवन्।।**

**काश्यपः संहिताकर्ता सावर्णिश्शांसपायनः।**
**रोमहर्षणिका चान्या तिसृणां मूलसंहिता।।**[३]

नैमिषारण्ये व्यासशिष्यः सूतः एव शौनकादिमुनीन् प्रति पुराणानि उपदिष्टवानिति "एकदा नैमिषारण्ये ऋषभः शौनकादयः, प्रपच्छुर्मुनय सर्वे सूतं पौराणिकं खलुह्व इति पारम्परिकपुराणवचनानुसारं ज्ञायते यत् ऋषीणां सत्रे नैमिषारण्ये भावित्वात् कुशाग्रेण लोमहर्षणसूतस्य वधः बलरामेण जातः। तद्यथा-

**एतावदुक्त्वा भगवान् निवृत्तोऽसद्वधादपि।**
**भावित्वात्तं कुशाग्रेण करस्थेनाहनत् प्रभुः।।**[४]

---

१. श्रीमद्भा.१२.७.२३.२४
२. श्रीमद्भा. १२.१३.१०
३. वि.पु.३.६.२८-२९
४. श्रीमद्भा.१०.७८.२८

तदा हाहेति वादिनः मुनयः सङ्कर्षणमूचुः, यदस्मै सत्रसमाप्तिं यावदस्माभिः ब्रह्मासनं शारीरिककष्टरहितमायुश्च दत्तम्। अजानता भवता ब्रह्मवधः आचरितः। ऋषीणां निवेदनं श्रुत्वा सत्रस्य सततप्रवर्तनाय तदा आत्मा वै जायते पुत्रः इति वचनानुसारं सूतपुत्रमुग्रश्रवां व्यासासने कृत्वा बलरामः मुनीनां कथनानुसारं स्वयं द्वादशमासान् यावत् तीर्थयात्रां कृत्वा ब्रह्महत्यया निर्मुक्तरभवत्।

अनेन वर्णनेन स्पष्टं यद् सूतपुत्रः उग्रश्रवा अपि पौराणिकः आसीत्। श्रीमद्भागवतं तु शौनकादिमुनीन् प्रति सौतिः एव श्रावितवान्। शौनकं प्रति श्रुणु पौराणिकान् मुने इति उक्त्वा सः कथयति-

**त्रय्यारुणिः कश्यपश्च सावर्णिरकृतव्रणः।**
**वैशम्पायनहारीतौ षड् वै पौराणिका इमे।।**

**अधीयन्त व्यासशिष्यात् संहितां मत्पितुर्मुखात्।**
**एकैकामहमेतेषां शिष्यः सर्वाः समध्यगाम्।।**

**कश्यपोऽहं च सावर्णी रामशिष्योऽकृतव्रणः।**
**अधीमहि व्यासशिष्याच्चतस्रो मूलसंहिताः।।**[१]

अर्थात् त्रय्यारुणिः कश्यपः सावर्णिः अकृतव्रणः वैशम्पायनः हारीतश्चेति षड् पौराणिकाः। एते मत्पितुः मुखात् साक्षाद्व्यासशिष्यात् सूतात् संहितामधीयन्त। एतेषां शिष्योऽहं सर्वाः षड् संहिताः समध्यगाम्, तथा च कश्यपः सावर्णिः अकृतव्रणः अहं च अन्याः चतस्रः मूलसंहितारपि व्यासशिष्यात् अधीमहि। एवं प्रकारेण वेदसंहितावत् काश्चन संहिताग्रन्थाः यथा पुराणसंहिता, व्याससंहिता, सूतसंहिता च इदानीमपि प्राप्यते। अष्टादशपुराणानां कर्त्ता सत्यवतीसुतः इत्यनुसारं व्यासकर्तृकाः अष्टादशपुराणग्रन्थाः प्राप्यन्ते एव। पुराणानां वर्ण्यविषयत्वेन पञ्चलक्षणानि प्रसिद्धानि। सर्वमान्यपुराणलक्षणमेतद् किञ्चित्पाठभेदेन यत्खलु बहुषु पुराणेषु प्राप्यते। तद्यथा-

**सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।**
**वंशानुचरितं चैव पुराणं पञ्चलक्षणम्।।**[२]

श्रीमद्भागवते तु स्थानद्वये पुराणानां दशलक्षणानि कथितानि, तयोः शब्दभेदं परिलक्ष्यते। तदुक्तं-

**अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः।**
**मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः।।**

**दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम्।**
**वर्णयन्ति महात्मानः श्रुतेनार्थेन चाञ्जसा।।**[३]

१. श्रीमद्भा.१२.७.५-७

२. मार्क.पु. १३४.१३

३. श्रीमद्भा.२.१०.१-२

अन्यत्र द्वादशस्कन्धेऽपि–

**पुराणलक्षणं ब्रह्मन् ब्रह्मर्षिभिर्निरूपितम्।**
**श्रृणुष्व बुद्धिमाश्रित्य वेदशास्त्रानुसारतः।।**

**सर्गोऽस्याथ विसर्गश्च वृत्ती रक्षान्तराणि च।**
**वंशो वंशानुचरितं संस्था हेतुरपाश्रयः।।**

**दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः।**
**केचित् पञ्चविधं ब्रह्मन् महदल्पव्यवस्थया।।**[१]

एवम्प्रकारेण आख्यानोपाख्यानगाथाकल्पशुद्धयश्च पुराणोपकरणानि तथा च पुराणलक्षणेषु समागताः सर्ग-विसर्ग-स्थान-वृत्ति-पोषण-रक्षा-ऊति-हेतु-अन्तराणि-मन्वन्तर-वंश-वंशानुचरित -ईशानुकथा-निरोध-संस्था-प्रतिसर्ग-मुक्ति-आश्रय-अपाश्रयादिपारिभाषिकशब्दाः श्रीमद्भागवतमाश्रित्य विवेच्यन्ते।

आख्यानमुपाख्यानञ्च- एतयोः द्वयोः प्रयोगस्तु कथानकस्य कृते विद्यते, परन्तु द्वयोर्मध्ये पर्याप्तः मतभेदोऽपि वर्तते। तद्यथा-

**स्वयं दृष्टार्थकथनं प्राहुराख्यानं बुधाः।**
**श्रुतस्यार्थस्य कथनमुपाख्यानं प्रचक्षते।।**[२]

श्लोकस्यास्य टीकायां स्वामिना श्रीधरेण एकः प्राचीनः श्लोक उद्धृतः। येन आख्यानोपाख्यानयोरन्तरं स्पष्टो भवति। यस्यार्थस्य साक्षात्कारः स्वयं वक्त्रा कृतः तदाख्यानं कथ्यते। यो हि अर्थो वक्त्रा व्यक्त्यन्तरेण श्रुतः स उपाख्यानं भवति।

उपर्युक्तविवेचनानुसारं मर्यादापुरुषोत्तमस्य श्रीरामचन्द्रस्य, सत्यव्रतस्य राज्ञो हरिश्चन्द्रस्य, धर्मिष्ठस्य राज्ञः ययातेश्च कथानकं परम्परया श्रुतकारणात् रामोपाख्यानं, हरिश्चन्द्रोपाख्यानं ययात्युपाख्यानञ्चोच्यते। अन्येषां विदुषां मते तु भेदोऽयं न दृष्टश्रुतकारणकः वर्तते, अपि तु महदल्पाकारको भवति। आकारेण यद् कथानकं महदस्ति तदाख्यानं, स्वाल्पाकारकं एकदेशवर्तिनं कथानकमुपाख्यानं निगद्यते, अर्थात् रामायणे रामचन्द्रस्य कथानकमाख्यानं तत्रैव बालिसुग्रीवयोः एकदेशवर्तिनं कथानकमुपाख्यानं कथ्यते।

गाथा- प्राचीनसाहित्येषु अनेकानि पद्यानि प्राप्यन्ते, येषां कर्तृणां नामानि नोपलभ्यन्ते। अतः अज्ञातकर्तृकाणां लोकप्रख्यातानां वैशिष्ट्यबोधकानां श्लोकानां संज्ञा गाथा इति। एतादृशासु पुराणगाथासु केषाञ्चिम्महापुरुषाणां सार्वभौमं जीवनदर्शनं संक्षेपतः एकस्मिन् द्वयोर्वा श्लोकयोः प्रकटीकृतं भवति। प्रायः एताः गाथाः प्राचीनकालतः सम्बद्धाः सत्यः कस्याश्चित् विशिष्टव्यक्तेः वैशिष्ट्यादिकं वर्णयन्ति। ऋग्वेदे तु एतादृश्यः गाथाः नाराशंसी इति पदवाच्याः भवन्ति। व्यासमुनिः एतादृशीनां गाथानामुपयोगः पुराणसंहितानिर्माणेऽकरोत्। यथा वायुपुराणे पितृगाथा-

१. श्रीमद्भा.१२.७.८-१०
२. अष्टादशपुराणदर्पणे २५

**एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्।**
**यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्।।**

**गयां यास्यति यः पुत्रः सःनस्त्राता भविष्यति।**
**गयाप्राप्तं सुतं दृष्ट्वा पितृणामुत्सवो भवेत्।।**[१]

**मत्स्यपुराणेऽपि-**

**अपि स्यात् स कुलेऽस्माकं यो नो दद्याज्जलाञ्जलिम्।**
**नदीषु बहुतोयासु शीतलासु विशेषतः।।**[२]

राजा ययातिरपि स्वजीवनस्यानुभवं अनया गाथया स्पष्टीकृतवान्-

**न जातु कामः कामानामुपभोगेन शाम्यति।**
**हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते।।**[३]

एवम्प्रकारेण पुराणेषु गाथा सम्बन्धिनः बहव श्लोकाः दृश्यन्ते।

कल्पशुद्धिः- शब्दस्यास्य तात्पर्यनिर्णये मतभेदो विद्यते, यतो हि अस्य स्थाने कल्पजोक्तिः इत्यपि प्रयोगः विद्यते। प्रसिद्धटीकाकारः स्वामी श्रीधरः कल्पशुद्धिः पदस्यार्थः श्राद्धकल्पमिति कृतवान्। पं० मधुसूदन-ओझामहोदयास्तु कल्पशुद्धिपदेन सम्पूर्णं धर्मशास्त्रं स्वीकुर्वन्ति। एतेषां मते कल्पस्य तात्पर्यं एतन्नामकं वेदाङ्गमिति यस्मिन् श्रौत-गृह्य-धर्मसूत्रादीनां समावेशः भवति। शुद्धिः पदेन तु षड्विधा शुद्धिः स्वीक्रियते, तद्यथा- मलशुद्धिः स्पर्शशुद्धिः अघशुद्धिः एनःशुद्धिः आत्मशुद्धिः मनशुद्धिश्च।

एवम्प्रकारेण पुराणसंहितानिर्माणे भगवता व्यासदेवेन आख्यानोपाख्यानगाथाकल्पशुद्धीनां सम्यगुपयोगः कृतः, यतो हि इमानि पुराणानां स्त्रोतांसि उपादानानि उपकरणानि वा भवन्ति। इतः परं पुराणलक्षणे समागतानां शब्दानां विवेचनं प्रारभ्यते।

सर्गः- सर्गो नाम कारणसृष्टिः। ब्रह्मणः प्रेरणया गुणेषु क्षोभकारणात् भूतमात्रेन्द्रियधियां जन्म सर्गः कथ्यते। अस्य क्रमो यथा गुणत्रयसाम्यावस्थापन्नायां प्रकृतौ पुरुषस्य प्रेरणया क्षोभकारणात् महत्तत्वस्याविर्भावः, महत्तत्वादहङ्कारः, ततः एकादशेन्द्रियाणि, पञ्चतन्मात्राश्च, पञ्चतन्मात्राभ्यः पञ्चमहाभूतान्युत्पद्यन्ते, इत्येवं तत्त्वोत्पत्तिक्रमः सर्गः इति। तदुक्तं-

**अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहमः।**
**भूतमात्रेन्द्रियार्थानां सम्भवः सर्ग उच्यते।।**[४]

---

१. वायुपु.१०५.९-१०
२. मत्स्यपु.-२०३.३
३. श्रीमद्भा.९.१९.१४
४. श्रीमद्भा.१२.७.११

द्वितीये स्कन्धेऽपि-

**भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः।**
**ब्रह्मणो गुणवैषम्याद् ————— ।।**[१]

विसर्गः- विसर्गो पौरुषः स्मृतः, इत्यनुसारं पुरुषेण जातेन ब्रह्मणा कृता चराचरप्राणिनां सृष्टिः विसर्गः उच्यते। विशिष्टः सर्गः विसर्गः अर्थात् कार्यसृष्टिः इति। परमात्मनः अनुग्रहणेन ब्रह्मणा सदसद्वासनाप्राधान्येन बीजाद्बीजमिव प्रवाहापन्नं यत् चराचरात्मकं जगदुत्पद्यते तद्विसर्गपदवाच्यः भवति। तदुक्तं-

**पुरुषानुगृहीतानामेतेषां वासनामयः।**
**विसर्गोऽयं समाहारो बीजाद् बीजं चराचरम्।।**[२]

वृत्तिः- प्राणिनां जीवननिर्वाहसामग्री वृत्तिः कथ्यते। जीवननिर्वाहार्थं चराणां प्राणिनामचराणि भूतान्येव वृत्तिः। गोधूम-तण्डुल-फलादीन् सर्वविधाः जीवनसामग्रीः वृत्तेरन्तर्गता भवन्ति। एतासु वृत्तिषु मनुष्यः काश्चन वृत्तयः स्वेच्छानुसारं तथा च काश्चन शास्त्रप्रेरणया स्वीकृतवान्। उभयविधवृत्तेरूद्देश्यं जीवनधारणमेव। तदुक्तं-

**वृत्तिर्भूतानि भूतानां चराणामचराणि च।**
**कृता स्वेन नृणां तत्र कामाच्चोदनयापि वा ।।३**

रक्षा– रक्षायाः सम्बन्धस्तु भगवदवतारेभ्यः भवति। युगे-युगे भगवान् पशुपक्षिमनुष्यर्षिदेवतादिरूपेणावतीर्य विविधां लीलां समुपस्थापयन् त्रयीद्विषः विनाश्य धर्मं संरक्षयति। तदुक्तं-

**रक्षाच्युतावतारेहा विश्वस्यानुयुगे युगे।**
**तिर्यङ्मर्त्यर्षिदेवेषु हन्यन्ते यैस्त्रयीद्विषः।।**[४]

मन्वन्तरम्– पुराणानुसारेण चतुर्दशमनवः भवन्ति। अन्यः मनुः मन्वन्तरम्। मनुरित्यादिषड्विधं मन्वन्तरमुच्यते। एते मन्वादयः षड्वर्गाः स्व-स्वाधिकारे यदा प्रवर्त्तन्ते सः कालः मन्वन्तरमित्युच्यते। मन्वन्तराणि सद्धर्म इति भागवतवचनानुसारं सद्धर्मयोः प्रवर्तनं मन्वन्तरमिति। सृष्टेः विविधकालमानस्य द्योतकोऽयं शब्दः। मनुः मनुपुत्राः ऋषयः, देवाः, इन्द्रः, भगवतः अंशावतारश्चेत्येवं षड्विशेषताभिः विशिष्टः कालः मन्वन्तरं भवति। प्रत्येकं मन्वन्तरस्य अधिपतिः कश्चन् मनुः, तथा च मनुपुत्राः सप्तर्षयः देवाः इन्द्रः भगवतः अवतारादयश्च तस्य मनोः सहयोगिनः सन्तस्तन्मन्वन्तरं पालयन्ति। तदुक्तं-

**मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वरः।**
**ऋषयोंऽशावतारश्च हरेः षड्विधमुच्यते।।**[५]

---

१. श्रीमद्भा.२.१०.३
२. श्रीमद्भा.१२.७.१२
३. श्रीमद्भा.१२.७.१३
४. श्रीमद्भा.१२.७.१४
५. श्रीमद्भा.१२.७.१५

वंश:– ब्रह्मण: सकाशाद् जातानां भूतभविष्यवर्तमानानां राज्ञाम् ऋषीणाञ्च सन्तानपरम्परा वंशपदवाच्या भवति। तदुक्तं-

**राज्ञां ब्रह्मप्रसूतानां वंशस्त्रैकालिकोऽन्वय:।**[१]

भागवते तु केवलं राज्ञां त्रैकालिकोऽन्वयमात्रमेव निर्दिष्टं, परन्तु पुराणान्तरे ऋषीणामपि ग्रहणात् वंशपरम्परायां तेषामपि समावेश: समुचित: प्रतिभाति।

वंशानुचरितम्– राज्ञादिवंशेषु जायमानानां विशिष्टपुरुषाणां वंशधराणाञ्च महत्त्वं विवरणञ्च यत्रोपलभ्यते तद्वंशानुचरितमिति। तदुक्तं-

**वंशानुचरितं तेषां वृत्तं वंशधराश्च ये।।**[२]

संस्था– ब्रह्माण्डस्य लय: संस्था पदेनाभिधीयते। एषा संस्था चतुर्विधा भवति। अस्य ब्रह्माण्डस्य स्वभावादेव प्रलय: जायते। नैमित्तिकप्रलय-प्राकृतिकप्रलय-नित्यप्रलय-आत्यन्तिकप्रलयभेदेन प्रलय: चतुर्विध: भवति। तदुक्तं-

**नैमित्तिक: प्राकृतिको नित्य आत्यन्तिको लय:।**
**संस्थेति कविभि: प्रोक्ता चतुर्धास्य स्वभावत:।।**[३]

हेतु:– अनेन शब्देन जीवस्येव ग्रहणं भवति। अविद्यया कर्मणि आसक्त: जीव: विश्वसर्गप्रतिसर्गयो: कारणमिति। अनेन कारणेनैव श्रीमद्भागवते स: हेतुरिति सार्थकेन पदेन अभिधीयते। एवं जीवं ये तत्त्वदृष्ट्या पश्यन्ति ते तु अनुशयी साक्षी वा स्वीकुर्वन्ति, तथा चोपाधितयावलोकयितार: एनमव्याकृतमामनन्ति। तदुक्तं-

**हेतुर्जीवोऽस्य सर्गादेरविद्याकर्मकारक:।**
**यं चानुशयिनं प्राहुरव्याकृतमुतापरे।।**[४]

अपाश्रय:–ब्रह्मण: महनीयत्वाभिधान: अपाश्रय: इति। उक्तञ्च श्रीमद्भागवते-

**व्यतिरेकान्वयो यस्य जाग्रत्स्वप्नसुषुप्तिषु।**
**मायामयेषु तद् ब्रह्म जीववृत्तिष्वपाश्रय:।।**[५]

श्लोकस्यास्य टीकायां स्वामी श्रीधर: लिखति, यत् जाग्रदादिस्ववस्थासु जीवतया वर्तन्ते इति जीववृत्तय: विश्व-तैजस-प्राज्ञा:। तेषु मायामयेषु साक्षितयान्वय: समाध्यादौ च व्यतिरेको यस्य तद् ब्रह्म संसार-प्रतीति-बाधयोरधिष्ठानावधिभूतमपाश्रय उच्यते। जाग्रतस्वप्नसुषुप्तिरिति तिस्र: अवस्था: जीवस्य भवन्ति। तर्हि यत्तिसृषु अवस्थासु विश्वतैजसप्राज्ञरूपेण विराजते, तथा च तत: परं तुरीयतत्त्वरूपेणापि साक्षितया लक्ष्यते, तदेव ब्रह्म अत्र अपाश्रय शब्देनोच्यते।

---

१. श्रीमद्भा.१२.७.१६
२. श्रीमद्भा.१२.७.१६
३. श्रीमद्भा.१२.७.१७
४. श्रीमद्भा.१२.७.१८
५. श्रीमद्भा.१२.७.१९

स्थानम्– एतद्वृत्तेरन्तर्गतमिति। स्थितिर्वैकुण्ठविजय: इति श्रीमद्भागवद्वचनेन वैकुण्ठस्य भगवत: विजय: स्थिति: स्थानं वा कथ्यते। भगवता निर्मितं ब्रह्माण्डं मर्यादाभ्यन्तरे एव समुत्कर्षं प्राप्नोति। भुवनकोशस्य साङ्गोपाङ्गा: लोकादय: सर्वेऽपि विषया स्थानस्यान्तर्गता: भवन्ति

पोषणम्– श्रीमद्भागवतस्य द्वितीयस्कन्धे पोषणं तदनुग्रह: इत्युक्तमर्थात् भगवत: अहैतुकरनुग्रह: पोषणमुच्यते। विविधतापपरिपीडितानां जीवानामुपरि भगवान् हेतुरहितां कृपां वर्षयति। भागवतस्य षष्ठे स्कन्धे तु मनुष्यदेवदैत्यानां कृते भगवत: नैसर्गिककृपाया: विस्तृतं वर्णनमुपलभ्यते। तत्र अजामिलसदृशं पापाचाररतं मानवं गुरुद्रोहकर्त्तारं विश्वरूपब्राह्मणहन्तारं देवराजमिन्द्रं तथा च दुराचारिणं दैत्यं वृत्रासुरम्प्रति स्वाचिन्त्यशक्तिमयीकृपाया: विलासं दर्शयित्वा भगवान् एतेषां त्रयाणामुद्धारं साधितवान्।

ऊतय:– भगवत: कृपाया: वृष्टि: सर्वदा जायते, तर्हि सुखमात्रमेवाभिलषन् जीव: किमर्थं दु:खी भवति ? दु:खस्य कारणमूतय: एव भवन्ति। उक्तञ्च भागवते ऊतय: कर्मवासना: इति। कर्मकर्त्तुं उत वा करणानन्तरं जीवे या तद्विषयणी वासना जायते सा भगवत्कृपाया: प्रतिपक्षिणी भवति। एषा वासना शुभाशुभवासनाभेदेन द्विविधा। शुभवासनाया: दृष्टान्त: प्रह्लाद:, य: मातु: गर्भे एव नारदस्य सत्सङ्गं सम्प्राप्य असुर: भूत्वाऽपि भगवद्भक्तिं कृत्वा भगवन्तमवाप्तवान्। अशुभवासनाया: दृष्टान्तौ जयविजयौ इति। तौ भगवत: द्वारपालौ भूत्वाऽपि सनत्कुमारै: द्वेषकारणात् त्रिषु जन्मसु क्लेशभागौ जातौ।

ईशानुकथा– भगवत: अवताराणां च तदनुवर्तिनां भक्तानाञ्च पावनं चरितमेव ईशानुकथा भवति। तदुक्तं-

**अवतारानुचरितं हरेश्चास्यानुवर्तिनाम्।**
**सतामीशकथा: प्रोक्ता नानाख्यानोपबृंहिता:।।**[१]

मन्वन्तरानन्तरं मन्वन्तरं, कल्पानन्तरं कल्पञ्चेति सततप्रवाहमानं भवति। एवं प्रवाहमाने सृष्टौ निमग्न: जीव: भगवत: लीलाकथामाध्यमेन भगवन्तं प्राप्नोति।

निरोध:– अस्य आत्मन: जीवस्य हरेर्योगनिद्रामनु इन्द्रियादिभि: रूपादिभि: सह भगवति शयनं लय: निरोध: कथ्यते। तदुक्तं-

**निरोधोऽस्यानुशयनमात्मन: सह शक्तिभि:।**[२]

मुक्ति:-अविद्याध्यस्तं रूपमन्यथारूपं कथ्यते । जीव: संसारदशाया देहेन्द्रियै: अध्यस्त: सन् आत्मानं देहमिन्द्रियं वा मनुते। एतदेव तस्य अन्यथारूपमिति। परन्तु यदा स्वस्य स्वरूपं ज्ञात्वा पुन: सद्रूपे स्वात्मनि अधिरोहति तदेव मुक्ति: कथ्यते। तदुक्तं-

**मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थिति:।**[३]

---
१. श्रीमद्भा. २.१०.५
२. श्रीमद्भा. २.१०.६
३. श्रीमद्भा. २.१०.६

ऋते ज्ञानान्न मुक्तिः इत्यनुसारं अध्यासजन्यमिथ्याज्ञानेन निर्मुक्तः जीवः एव यथार्थज्ञानेन सच्चिदानन्दे परमात्मनि प्रतिष्ठितः सन् मुक्तिपदभाक् भवति।

आश्रयः– यतःचराचरस्य जगतः आभासः अर्थात् सृष्टिः चकारात् स्थितिपोषणादयः एवञ्च निरोधो लयः अर्थात् मुक्तिश्च प्रकाशते। यश्च परब्रह्म परमात्मेति प्रसिद्धः, सः एव आश्रयः इति कथ्यते। तदुक्तं-

**आभासश्च निरोधश्च यतश्चाध्यवसीयते।**
**स आश्रयः परं ब्रह्म परमात्मेति शब्द्यते।।**[१]

प्रतिसर्गः– सर्गः सृष्टिः तस्य वैपरीत्यमर्थात् प्रलयः प्रतिसर्गः कथ्यते। दृश्यमानस्य प्रपञ्चस्य अभावः प्रलयः इति। श्रीमद्भागवतानुसारेण संस्थापद्वाच्य एषः प्रतिसर्गः नित्यनैमित्तिकप्राकृतिकात्यन्तिकप्रलयभेदेन चतुर्विधः भवति। प्रतिसर्गस्य स्थाने श्रीमद्भागवते प्रतिसंक्रमः, विष्णुपुराणे प्रतिसञ्चरश्च प्रयुक्तः। तद्यथा-

**कालद्रव्यगुणैरस्य त्रिविधः प्रतिसंक्रमः।**[२]

विष्णुपुराणस्य मतमस्ति यत् प्रतीयमानं जगत् गतप्रलये प्रकतौ लीनमासीद्, एतस्मात् कारणात् प्रपञ्चस्य एषः लयः प्राकृतप्रलयः कथ्यते। तदुक्तं-

**प्रकृतौ संस्थितं व्यक्तमतीतप्रलये तु यत्।**
**तस्मात्प्राकृतसंज्ञोऽयमुच्यते प्रतिसञ्चरः।।**[३]

श्रीमद्भागवते स्थानद्वये पुराणलक्षणमभिहितम्। तत्र द्वितीयस्कन्धे साक्षादभिहितं यत् दशमस्य आश्रयतत्त्वस्य विशुद्ध्यर्थमेव अन्येषां नवानां सर्गादीनां वर्णनमावश्यकं वर्तते। एवं पुराणप्रतिपाद्यै एतैः सर्वैः विषयैः प्राप्यः परमात्मा परब्रह्म एव। यतो हि व्यापकत्वात् भगवान् अन्तर्यामितया आत्मरूपेण सर्वेषु जागतिकविषयेषु वर्तते। तत्सृष्ट्वा तदेवानुप्राविशत् वचनमिदमभिलक्ष्य श्रीमद्भागवते कथितं यत् आकाश-वायु-अग्नि-सलिल-मही-नक्षत्र-प्राणि-दिक्-वृक्ष-सरित्समुद्रादयः हरेः शरीरं वर्तते। यतो हि सर्वविधस्वरूपैः भगवान् एव प्रकटितः अस्ति। अतः प्राणिनमप्राणिनम्प्रति अवश्यमेव परमात्मभावेन प्रणतिं निवेदयेत्। तदुक्तं-

**खं वायुमग्निं सलिलं महीं च, ज्योतींषि सत्त्वानि दिशो द्रुमादीन्।।**
**सरित्समुद्राश्च हरेः शरीरं, यत्किञ्च भूतं प्रणमेदनन्यः।।**[४]

श्रीमद्भागवतमहापुराणं पुराणतिलकत्वेन विद्वद्भिः स्वीकृतम्। विद्यावतां भागवते परीक्षा उक्तिरियमस्य वैशिष्ट्यं प्रकाशयति। देवर्षेः नारदस्योपदेशेन समाधिमग्नः महर्षिः व्यासः पुराणमेतद् रचयित्वा निवृत्तनिरतं मुनिं शुकमध्यापयामास। एतादृशं महनीयपुराणमाश्रित्य पुराणविद्यायां वर्णितानां प्रमुखानां पारिभाषिकशब्दानां दिङ्मात्रावलोकनं कृतमिति शम्।

---

१. श्रीमद्भा.२.१०.७
२. श्रीमद्भा.३.१०.१४
३. वि.पु.१.२.२५
४. श्रीमद्भा.११/२/४१

ISSN - 0974-8946 शोधप्रभा
जनवरी-मार्च 2018 वर्ष: 43, द्वितीयाङ्कः

# भारतीयसंस्कृत्यां सामञ्जस्यसूत्राणि

**सत्यमूर्त्तिः***

विचित्रा खल्वियं भारतीयसंस्कृतिस्रक्। कुसुमायमाना भान्त्यत्र दर्शनसम्प्रदायप्रवादाः। अत्र संगच्छन्ते विभिन्नमतान्यनुसरन्तः। संवदन्ते च विविधवादाननुगच्छन्तः। सहावतिष्ठन्तेऽत्रत्याः शान्तिमन्तः। सद्भावः खल्वेषां भावः। अहिंसाप्रसारणकारणा वरीवर्ति मतभेदबहुलेयं विश्ववारा संस्कृतिः। न कदाचिदिहत्या मतभेदा विभावयामासु भीषणनरसंहारकृत्यम्।

जगति सहिष्णुताप्रसारः स्यादित्याधुनिकानां बहुपक्षपातः। वयमिहावलोकयामः। कोऽयं सहिष्णुतापदार्थः? मन्ये सहिष्णुतेत्ययं शब्दः भारतीयसंस्कृतिप्रसङ्गेऽपगतार्थ इव संवृत्तः। सहिष्णुता नाम सहनभावः। अप्रियमाचरतः प्रत्यप्युदारः कश्चन भाव इति न सहिष्णुतापदपदार्थः । वस्तुतस्तु हार्दममर्षभावं निगूह्य मनोवाक्कर्मभिरप्रियवृत्तीः प्रत्यहितकारित्वाभाव एव सहिष्णुतापदपदार्थ मन्ये।

सहिष्णुतेयं सामाजिकसौहार्दमुत्पादयति, परं तादृशस्य सामाजिकसौहार्दस्य चिरस्थायित्वं न भवितुमर्हति। वस्तुतस्तु दीर्घकालिकदृष्ट्या सहिष्णुता सामाजिकसमरसत्वस्य विरोधिनीवैव। अत एव भारतीयसंस्कृत्यां सहिष्णुतायाः स्थाने स्वीकरणस्य महत्त्वं गीयते। परेषां मतानामविरोधितत्त्वान्यङ्गीकृत्य तेषां च स्वमते समन्वयः क्रियते चेत्तर्ह्येव कोऽपि समाजः चिरस्थायि सौहार्दमधिगमिष्यति। शोधनिबन्धेऽस्मिन् भारतीयसंस्कृत्यां नानादार्शनिकसाम्प्रदायिकमतानां समन्वयस्य या पृष्ठभूमिरस्ति; यान्यत्र वा तस्य सूत्राणि प्रसृतानि; तेषां विश्लेषणं करिष्यते यतः समाजे चिरकालादेव शान्तिः सौहार्दं समरसत्वं च वरीवृतति ।

**सामञ्जस्यस्य वैदिकी पृष्ठभूमिः** - परमतानामविरोधितत्त्वान्यङ्गीकृत्य तेषां स्वमते समन्वयस्य प्रवृत्तिर्वैदिककालादेव लक्ष्यते। अथर्ववेदेऽनेके तादृशाः लोकाचाराः प्राप्यन्ते, ये प्रायेण द्रविडक्षेत्रे प्रथिता आसन्निति ब्रुवते विद्वांस ऐतिह्यविदः। परं वैदिकार्याः तानङ्गीकृत्य तेषामार्यसंस्कृत्यां समन्वयं कृतवन्त इति वयं जानीमः। एवमेव क्रमेण वेदचतुष्टयेऽथर्ववेदोऽपि प्रतिष्ठापितः। ध्यातव्यमिदं यदथर्ववेदः त्रय्यां न परिगणितः।[1] वैदिकरुद्रस्य स्वरूपमन्यासां वैदिकदेवतानां स्वरूपतः सर्वथा

---

* सहाचार्यः, विशिष्टसंस्कृताध्ययनकेन्द्रम्, जवाहरलालनेहरूविश्वविद्यालयः, नवदेहली

1. अथर्ववेदस्य विषये मतभेदाः सन्ति। ऋचो यजूँषि सामानि च वेदस्य संरचनामूलको विभागः। [मीमांसासूत्रम्; 2. 1.33-35] मधुसूदनसरस्वती प्रस्थानभेदे मीमांसापरम्परामनुसरन् त्रय्या ऋग्यजुःसामरूपसंरचनाधारितत्वं

भिन्नम्। अस्मिन्नपि विषये एवं मन्यन्ते विद्वांसो यद् यस्य समता वैदिकरुद्रेण सह क्रियते तच्छिवः पूर्वं वैदिकार्याणां देवो नासीत्। परन्त्वार्यधर्मस्याविभाज्याङ्गत्वेन तस्यापि परिग्रहः परवर्तिकाल एव संवृतः।[1] ऋग्वेदस्य प्रथमे मण्डले बहुदेववादतः या विचारयात्राऽऽरभ्यत दशमे मण्डले तस्याः चरमपरिणतिरेकेश्वरवादे समवर्तत। तस्यैव प्रथमे मण्डले क्रान्तद्रष्टा कविरुद्घोषयति यदेकमेव सदृषिभिर्बहुधा गीयते।[2] दशमेऽपि मण्डले पुरुषसूक्ते विराट् पुरुषो निखिलजगत्कारणत्वेन निरूपितः।[3] बहुदेववादादारभ्यैकेश्वरवाद पर्यवसायिनीयमेव विचारयात्रोपनिषत्सु वैशद्येनाविर्भवति। माण्डूक्योपनिषदि निखिलजगतोऽन्तरात्मनश्च प्रतिपादनं परमतत्त्वब्रह्मत्वेन कृतम्।[4] मुण्डकोपनिषदि प्रतिपादितं यत् यथा स्यन्दमाना नद्यो नामरूपेऽपि समर्प्यार्णवभावनामुपयान्ति तथैव पुरुषोऽपि स्व-भावं समर्प्य ब्रह्मभावनामुपयाति।[5] सर्वमप्येतन्निदर्शनजातं बहुत्व एकत्वस्य भारतीयां दृष्टिमेव प्रमाणीकरोति। इयमेवाभेददृष्टिर्भारतीयसंस्कृत्यां मतमतान्तरेषु सामञ्जस्य व्यवस्थापनार्थाय महतीं भूमिकां निर्वहति।

**पौराणिककाले समन्वयवादिनी दृष्टिः** - महाकाव्यकाले पुराणकाले चापि सैव सामञ्जस्यकारिणी दृष्टिः भारतस्य विभिन्नमतमतान्तरेषु लक्ष्यते। अस्मिन् विषये वैष्णवमतशैवमतयोरन्तरा सामञ्जस्यं विशेषेणोल्लेख्यम्। यद्यपि भगवान् रामो रामायणस्य भगवान् कृष्णश्च महाभारतस्य प्रमुखदेवत्वेन वर्णितौ परं भगवतो विष्णोरेभिरवतारैर्भगवन्तं शिवं प्रत्यनन्या श्रद्धा प्रकटीकृता। पौराणिकसंस्कृत्यां विद्यमानः ब्रह्मविष्णुमहेश्वरान्वितस्त्रिदेववादोऽपि सामञ्जस्यस्य शोभनं निदर्शनं वर्तते। स्कन्दपुराण एकस्मिन् स्थले शिवविष्णोर्मध्ये समत्वं निरूप्य कथितं यत् तयोर्मध्ये मनागपि भेदो न वर्तते।[6] नारदपुराणेऽप्येतादृशमेव विचारं प्रकटीकृत्य प्रतिपादितं यत् यो ब्राह्मणोऽपि सन्नेतयोर्देवयोर्मध्ये भेदं व्यवहरति सो दारुणं नरकमधिगच्छति।[7] यद्यस्माकं पुराणानि शिवविष्णोर्मध्ये समत्वं प्रतिपादयन्ति तर्हि शैवानां वैष्णवानां च परस्परं विरोधस्यावकाशः कुत्र विद्यते? इतिहासविदः मन्यन्ते यत् चोलवंशीयेन

स्वीकरोत्यथर्ववेदस्य गणना चायागाङ्गत्वेन त्रय्यां न करोति। सर्वदर्शनसंग्रहे माधवाचार्योऽप्यमुमेव विचारं समर्थयति। [द्रष्टव्यं - सर्वदर्शनसंग्रहे पातञ्जलदर्शनम्; पृष्ठम् 603] आधुनिकैकदेशीयमतानुसारेणाथर्ववेदस्य रचनाऽऽर्यतन्त्रे समावेशश्च परवर्तिकाल एव सञ्जातः। [द्रष्टव्यं - तन्त्र : इट्स मिस्टिक् एण्ड् साइण्टिफिक् बेसिस्; पृष्ठम् 19-23; हिस्ट्री ऑफ साइन्स फिलॉसफी एण्ड् कल्चर इन इण्डियन सिविलाइजेशन् (खण्ड 15, भाग 1); पृष्ठम् 6] निष्कर्षोऽयमस्यैव मतानुसारेण वर्तते।

1. ए सोशल हिस्ट्री ऑफ इण्डिया ; पृष्ठम्. 148.
2. ''इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्। एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः।।'' - ऋग्वेद; 1.164.46
3. ''पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यम्...।'' - ऋग्वेद; 10.90
4. ''सर्वं ह्येतद् ब्रह्माऽयमात्मा ब्रह्म सोऽयमात्मा चतुष्पात्।।'' - माण्डूक्योपनिषद्; 2
5. ''यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय।
   तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्।।'' - मुण्डकोपनिषद्; 3.2.8
6. ''यथा शिवस्तथा विष्णुर्यथा विष्णुस्तथा शिवः।
   अन्तरं शिवविष्णोश्च मनागपि न विद्यते।।'' - स्कन्दपुराण; 1.8.20
7. ''हरिशंकरयोर्मध्ये ब्राह्मणश्चापि यो नरः।
   भेदं करोति सोऽभ्येति नरकं भृशदारुणम्।।'' - नारदपुराण; 6.48

कुलोत्तुङ्गप्रथमेन प्रताडितः सन् महान् विशिष्टाद्वैतवादी रामानुजाचार्यः श्रीरङ्गं परित्यक्तवान्।[1] परन्त्वेतादृशां निदर्शनानामस्माकं राष्ट्रे प्रायेण दुर्लभत्वमेव। संस्कृतव्याकरणपरम्परायामपि हरिहरा[2]विति ईशकृष्णा[3]विति शिवकेशवा[4]विति च द्वन्द्वसमासस्योदाहरणानि वैष्णवमतशैवमतयोः सामञ्जस्यमेवोपस्थापयन्ति।

**दार्शनिकधार्मिकमतमतान्तरेषु सामञ्जस्य०म्**- भारतीयसंस्कृत्यां धर्मदर्शनयोरयुतः कश्चन सम्बन्धो वर्तत इति जानन्ति विज्ञाः। असावेव च सम्बन्धविशेषोऽस्मद्धर्मप्रवादानां दृढा काचनाधारभूमिः। भारतीयधार्मिकसम्प्रदायानां सामञ्जस्यकारिणीं वृत्तिं ज्ञातुमिच्छुभिस्तेषां सामञ्जस्यसूत्रं तदीयदर्शनेष्वेव द्रष्टव्यम्।

भारतीयदर्शनस्य सम्प्रदाया नास्तिकास्तिकवर्गयोर्द्विधा विभाजिताः। एकत आस्तिकवर्गे प्राधान्येन सांख्यं योगः पूर्वमीमांसोत्तरमीमांसा न्यायो वैशेषिकश्चेति षड् दर्शनानि सन्ति। नास्तिकवर्गे चापरतः प्राधान्येन बौद्धमतं जैनमतं चार्वाकमतं चेति त्रीणि दर्शनानि सन्ति।

पूर्वमीमांसोत्तरमीमांसयोर्हीनयानमहायानयोर्वैष्णवमतशैवमतयोर्वज्रयानशाक्तमतयोश्च यत् सामञ्जस्यं लक्ष्यते तत् परिचायकं वर्तते यत् कथं भारतीयधार्मिकदार्शनिकसम्प्रदाया विरोधेषु सत्स्वपि नैरन्तर्येण सौहार्दपूर्वकं सहजीविन आसन्। भारतीयधार्मिकदार्शनिकसम्प्रदायेषु अन्तरातन्त्रं (intra-system) अन्तरामतं (intra-school) अन्तःतन्त्रं (inter-system) च सर्वप्रकारकं सामञ्जस्यं दृश्यते।

**अन्तरातन्त्रं सामञ्जस्यम् (intra-system harmony)**- एवंविधं सामञ्जस्यं समानतन्त्रद्वये दृश्यते। आस्तिकसम्प्रदायेष्वन्तरातन्त्रसामञ्जस्य तु वेद एवोत्सभूतः। वेदानामुत्सत्वाच्च सर्वेषामास्तिकसम्प्रदायानां विरोधोऽपि तलवर्त्त्येव। शङ्कराचार्येण तदनुवर्तिभिर्वेदान्तिभिश्च पूर्वमीमांसोत्तरमीमांसयोर्सिद्धान्तानां समन्वयः साधु कृतः। ते हि कर्मणो भक्तेश्च ज्ञानविरोधित्वं नाभ्युपगच्छन्ति। विशुद्धज्ञानमार्गिणोऽपि ते ज्ञानमार्गस्याऽऽद्यसोपानत्वेन तयोरुपादेयत्वं स्वीकुर्वन्ति। एत आचार्याः कर्मणश्चित्तशुद्धये भक्तेश्च चित्तैकाग्र्यायोपकारकत्वस्तीति मन्वते तयोर्ज्ञानमार्गस्य पूरकत्वं ब्रुवते स्वमते च तयोः समन्वयं कुर्वते।

**अन्तरामतं सामञ्जस्यम् (intra-school harmony)**- इदं सामञ्जस्यमान्तरिकमेव। एवंविधं सामञ्जस्यमेकस्मिन्नेव तन्त्रे दृश्यते। उपनिषद्गीताब्रह्मसूत्रात्मिका प्रस्थानत्रयी वेदान्तदर्शनस्य सर्वासां शाखनामाधारभूमिरस्ति। अत एव कारणाद् वेदान्तस्य विविधशाखासु एवंविधं सामञ्जस्यं प्राप्यते। सप्तमशताब्दस्य महानद्वैताचार्यो गौडपादो माण्डूक्योपनिषद एकस्यां कारिकायामद्वैतं पारमार्थिकं ब्रुवाणोऽपि व्यावहारिकं द्वैतं तदीयभेदरूपेणैव स्वीचकार। द्वैताद्वैतयोरात्यन्तिकं विरोधो न वर्तते।[5] परवर्त्तिकाले

1. प्राचीन भारत का इतिहास तथा संस्कृति; पृष्ठम्. 827.
2. ''द्वन्द्वे घि''- अष्टाध्यायी; 2.2.32
3. ''अजाद्यदन्तम्'' - अष्टाध्यायी; 2.2.33
4. ''अल्पाच्तरम्'' - अष्टाध्यायी; 2.2.34
5. ''अद्वैतं परमार्थो हि द्वैतं तद्भेद उच्यते।
   तेषामुभयथा द्वैतं तेनायं न विरुध्यते।।'' - माण्डूक्योपनिषत्कारिका; 3.8

गौडपादाचार्यनिर्मितेष्वाधारस्तम्भेष्वेव शङ्कराचार्येणाद्वैतवादस्य सिद्धान्तानां भव्यप्रासादो निर्मितः। पुनः शङ्कराचार्यस्याद्वैतवादे प्रातिभासिकसत्ताव्यावहारिकसत्तापारमार्थिकसत्तारूपत्वेन सत्तात्रयं परिकल्प्य जागतिकानुभवाः युक्तियुक्तत्वेन व्याख्याताः। अभेदेऽपि भेदसमन्वयस्य कीयान् शोभनोऽयं दृष्टान्तविशेषः?

विशिष्टाद्वैतवादस्य तत्त्वमीमांसायां चिदचिद्ब्रह्मणां स्वरूपाणां नितान्तविरुद्धत्वं वर्तते। परन्तु रामानुजाचार्येणात्मनश्चिदचिद्विशिष्टब्रह्मवाद एतेषां परस्परविरोधिनामपि तत्त्वानां शोभनः समन्वयः श्रीभाष्ये सविस्तरं प्रतिपादितः। तस्यैवापरे ग्रन्थे वेदार्थसंग्रह आपततो विरोधित्वेन प्रतीयमानानां तत्त्वमसीत्यादीनामुपनिषद्वाक्यानां विरोधपरिहारपूर्वकमर्थसमन्वयः सुष्ठुत्वेन व्यवस्थापितः। अन्तरामत-सामञ्जस्यस्यैते कतिपया दृष्टान्ताः।

**अन्तःतन्त्रं सामञ्जस्यम् (inter-system harmony)**- एवंविधं सामञ्जस्यमसमानतन्त्रद्वये दृश्यते। महायानसनातनमतयोर्मध्ये सामञ्जस्यस्य कतिपया दृष्टान्ता द्रष्टव्या। बौद्धमते पूर्वं पालिभाषैव श्रद्धयाऽभिमताऽऽसीत् सनातनमतविरोधप्रदर्शनार्थं च बौद्धमते संस्कृतभाषोपेक्षिताऽऽसीत्। परं परवर्त्तिकाले महायानमते संस्कृतभाषाऽपि दार्शनिकसंवादाय स्वीकृतिमाप। सनातनमतेन सह समन्वयकारिणानेनैवाभिक्रमेण पालिसंस्कृतयोः मिश्रणेन बौद्धसङ्करसंस्कृतं प्रादुरभूत्। सनातनमतादेव भक्तेः प्रेम्णश्च तत्त्वानि गृहीत्वा महायानमते समावेशितानि। यद्यपि प्राचीनबौद्धमत ईश्वरस्य सत्ता नाङ्गीकृता परन्तु महायानमतावलम्बिभिः सनातनमतेन सह समन्वयं कर्तुं भगवान् बुद्ध एवेश्वरपदे प्रतिष्ठापितः। विनिमयत्वेन सनातनमतेनापि विष्णोर्नवमावताररूपेण भगवान् बुद्धः आत्मनः तन्त्रे सादरं स्वीकृतः। अपरतः सनातनमतस्यावतारवादः महायाने स्वीकृत्य बोधिसत्त्वरूपेण भगवतो बुद्धस्यापि नानावताराः परिकल्पिताः। यद्यपि तन्त्र इमे सर्वथा विरोधिनी तथापि पारस्परिकविचारविनिमयत्वेनानयोः सामञ्जस्यं कृतम्। एतादृश उदाहरणानि पदे पदे वर्तन्ते। अनेनैव क्रमेण वज्रयाने शाक्तमतस्याचाराणां प्रभूतप्रभावो लक्ष्यते।[1]

इदानीं जैनसनातनमतयोर्मध्ये सामञ्जस्यैको दृष्टान्तो द्रष्टव्यः। सनातनमतस्य तत्त्वमीमांसाया-मीश्वरस्य जगतः प्रतिकणमनुस्यूतिर्जगतोऽतीतत्वं च स्वीक्रियेते।[2] एतादृश्याः तत्त्वमीमांसाया अनुसारेणैव सनातनमतस्याचारशास्त्रमपि दृश्यते। जैनमतावलम्बिनोऽपि समस्तप्रकृत्यां पृथिवीकायिकजल-कायिकाग्निकायिकवायुकायिकानां सूक्ष्मजीवानामुस्थितिं स्वीकुर्वन्ति। यद्यपि तयोस्तत्त्वमीमांसे सर्वथा भिन्ने स्तः परन्त्वाचारशास्त्र उभयत्रान्तिमः परिणामः समान एव। सनातनमतं समस्तजडचेतनात्मकजगत ईश्वरव्यापकत्वेन सर्वत्रेश्वरभावनया कारुण्यमयीं दृष्टिं निदधाति तदनुसारेणैव चाचरति। जैनमतमपि सर्वत्र सूक्ष्मजीवोपस्थिततत्वेन सर्वत्र तामेव दृष्टिं निदधत् हिंसापरिहारपूर्वकमाचरति।

भारतीयसंस्कृत्यां विभिन्नमतानां सामञ्जस्यविधानेन यत्संश्लेषणं प्रस्तुतमस्ति तस्यान्यान्यपि निदर्शनानि द्रष्टव्यानि। बौद्धमते प्रतिपादितानां दुःखदुःखसमुदयदुःखनिरोधदुःखनिरोधप्रतिपद्रूपाणां चतुर्णामार्यसत्यानामुल्लेखो न्यायमते सांख्यमते च हेयहेयहेतुहानहानोपायरूपनामान्तरैः प्राप्यते।[3] एवंप्रकारेण

1. प्राचीन भारत का इतिहास तथा संस्कृति; पृष्ठम् 860
2. ''पुरुष एवेदं सर्वं ... अत्यतिष्ठद् दशाङ्गुलम् ।।'' - ऋग्वेद; 10.90
3. न्यायभूषणम्; पृष्ठम् 442.

परस्परविरोधिष्वपि दर्शनेषु समानाधारत्वं पश्यामो वयम्। भारतीयदर्शने सामञ्जस्यस्य सर्वोत्तमनिदर्शनद्वयं वर्तते यत् सिद्धान्तभेदेऽपि योगदर्शनस्य साधनापक्षः प्रायेण सर्वैः सादरं स्वीकृतः। द्वितीयतः न्यायमते प्रतिपादितानामान्वीक्षिकीविद्यावादशास्त्रनव्यन्यायभाषादीनां प्रयोगः विभिन्नैः सम्प्रदायैरावश्यकतानुसारेण कृतः यतो ह्येतान्युपकरणानि सर्वशास्त्रोपकारकानि भवन्ति। उक्तमपि काणादं पाणिनीयं च सर्वशास्त्रोपकारकमिति। स्वयं वात्स्यायनेन पक्षिलस्वामिना न्यायविद्यायाः सर्वविद्याप्रदीपत्वं सर्वकर्मोपायत्वं सर्वधर्माश्रयत्वं च घोषितानि।[1]

भारतीयसन्दर्भे पञ्चसाम्प्रदायिकविचारधाराणां विवेचनमत्रानिवार्यं प्रतीयते। एतानि सन्ति – 1. उदासीनतावादः (indifferentism) 2. ऐकान्तिकतावादः (exclusivism), 3. समावेशवादः (inclusivism), 4. नानात्ववादः (pluralism), 5. सार्वभौमिकतावादः (universalism) च।

**1. उदासीनतावादः (indifferentism)** – उदासीनतावाद एवं मन्यते यत् सर्वेषु सम्प्रदायेषु प्रायेण भेदो न वर्तते, ते च न्यूनाधिक्येन समाना एव।[2] न केवलमशिक्षिता जना अपितु शिक्षिता अपि जना धर्मदर्शनान्यजानन्तः सामान्येन एवं टिप्पणीं कुर्वन्ति यत् सर्वे सम्प्रदायाः समाना एव। परन्त्वज्ञानमूलकत्वेनोदासीनतावादः चिरस्थायित्वेन शान्तिं सौहार्द्रं च नेतुं न समर्थः।

**2. ऐकान्तिकतावादः (exclusivism)** – आत्मनः सम्प्रदायस्यैव समीचीनत्वमन्येषां त्वसमीचीनत्वं पश्यत्ययं वादः। अस्या अनुसारेण परमप्रकाशनायाः केवलमेकमेव सद्रूपत्वमस्ति तस्या अनुरूपेण मोक्षस्याप्येकरूपत्वं भवति।[3] ऐकान्तिकतावादः कदापि भारतीयपरम्परायां मतिमत्सु न प्रशस्तः। परन्त्वद्यत्वे विचारधारेयं समाजस्य शान्तये सौहार्द्राय च वास्तविकं संकटं प्रस्तौति। तस्मादेषा सर्वथा तिरस्करणीया।

**3. समावेशवादः (inclusivism)** – यद्यपि विचारधारेयमात्मनः सम्प्रदायस्यैव समीचीनत्वं मन्यते तथाप्यन्येषां सम्प्रदायानामसमीचीनत्वं न प्रतिपादयति। तस्या अनुसारेणान्येषां सम्प्रदायानां सिद्धान्ताः स्वसिद्धान्त एवानुस्यूता वर्तन्ते। विचारधारायामस्यामेवं मन्यते यत् स्वसम्प्रदाये प्रतिपादिता या परमप्रकाशना भवति सा एव सर्वोत्तमा पूर्णाऽन्तिमा च। तस्या अनुसारेणान्येषां सम्प्रदायानां यावत्योऽपि प्रकाशनाः वर्तन्ते ताः सर्वाः निकृष्टकोटिका अपूर्णा आरम्भिक्यश्च। अन्ये सम्प्रदायाः स्वसम्प्रदायस्य साधनापद्धत्यै सज्जीकरणायाऽङ्गभूता एव।[4] भारतीयपरम्परायां विशेषेण भारतीयदर्शने विचारधारेयं यत्र-तत्रोपलभ्यते। न्यायभूषण एकस्मिन् स्थले भासर्वज्ञोऽपि जैनादिशास्त्राणां प्रामाणिकत्वखण्डनसन्दर्भे तेषामेकदेशसंवादिवचनानां वेदत एवाहृतत्वं सिद्धयन् कथयति ''जिनादिभिस्तु दृष्टार्थेन वञ्चितैरनाद्यविद्याभ्यासजनितेन मिथ्याभिमानेन स्वपक्षरागेण च वेदवेदाङ्गेभ्योऽर्थं विज्ञाय स्वदर्शने

1. ''प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
   आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता।।'' – न्यायभाष्यम्; 1.1.1.
2. हार्मनी ऑफ रिलीज़न्स; पृष्ठम् 4.
3. हार्मनी ऑफ रिलीज़न्स; पृष्ठम् 13.
4. हार्मनी ऑफ रिलीज़न्स; पृष्ठम् 14.

प्रत्ययोत्पादनार्थं गारुडादिकं च भाषान्तरेणोपदिष्ट''मिति।[1] एते विचाराः समावेशवादमेवोद्घाटयन्ति। शङ्कराचार्योऽपि सांख्यादिशास्त्राणां हेयत्वं प्रदर्शयन् कथयति – '' तथापि महाजनपरिगृहीतानि महान्ति सांख्यादितन्त्राणि सम्यग्दर्शनापदेशेन प्रयुक्तान्युपलभ्य भवेत्केषांचिन्मन्दमतीनाम् – एतान्यपि सम्यग्दर्शनायोपादेयानि – इत्यपेक्षा, तथा युक्तिगाढत्वसम्भवेन सर्वज्ञभाषितत्वाच्च श्रद्धा च तेषु – इत्यतस्तदसारतोपपादनाय प्रयत्यते।''[2] परं व्यावहारिकसत्तादृष्ट्या तत्तन्मतानां सामञ्जस्यमपि शांकरदर्शने प्रायेण कृतमेव। ध्यातव्यमिदं यत् समावेशवादो वस्तुतः श्रेष्ठतावादस्यैव प्रखरा अभिव्यक्तिः। अत्रौदार्यपूर्वकमन्येषां पक्षाणां स्वीकरणं नैव दृश्यते।

**4. नानात्ववादः (pluralism)**- विंशतिशताब्द्यां विकसितेयं विचारधारात्यन्तं समादृता। अस्यां विचारधारायां मन्यते यत् प्रत्येकं सम्प्रदायस्य समीचीनत्वं वर्तते यतो हि प्रकाशनाः बहव्यो भवितुमर्हन्ति। अत एव विभिन्नाः मोक्षमार्गाः सम्यगेव। एकस्यैव सत्यस्याऽऽयामा बहवः सन्ति अतः मानवाः स्वरुच्यनुसारेण स्वसामर्थ्यानुसारेण च भिन्नभिन्नमार्गाननुसरन्त आयामविशेषं भजन्ते।[3] विभिन्नसम्प्रदायानां विशेषाण्यनुपेक्ष्य तेषां मध्ये पारस्परिकावबोधस्य सामञ्जस्यस्य च व्यवस्थापनार्थाय नानात्ववादस्य महती भूमिका भवितुमर्हति। भारतस्य सन्दर्भे प्रारम्भिकी वैदिकसंस्कृतिर्नानात्ववादमेव समर्थयति यतो ह्यन्यान्यर्षिभिरन्यान्यदेवाः सम्पूजिताः। जैनमतस्यानेकान्तवादोऽपि जीवनस्य प्रत्येकं पक्षे नानात्ववादिनीं दृष्टिमेव समर्थयति। नानात्ववादस्य गुणबहुत्वेऽप्ययमवधिर्वर्तते यदयं केवलं विभिन्नसम्प्रदायानां भेदानेव पश्यति। नानात्ववादस्य वास्तविको लाभस्तदैव भविष्यति यदास्य पर्यवसानं सार्वभौमिकतावादे भविष्यति।

**5. सार्वभौमिकतावादः (universalism)** – विभिन्नसम्प्रदायानां सामान्यतत्त्वानामन्वेषणमेव सार्वभौमिकतावादस्य लक्ष्यं भवति। यदि वयमात्मनः सूक्ष्मेक्षिकां प्रयुञ्जीमहि तर्हि तथ्यमिदमाविर्भवति यत् भारतीयसंस्कृत्या : प्रत्येकं पक्षः प्रायेण सार्वभौमिकतावादस्यैव संदेशेन गुञ्जायमानो वर्तते। महान् हिन्दुविचारकः स्वामिविवेकानन्दो भारतीयसंस्कृत्याः सार्वभौमिकतावादिन्या दृष्ट्याः समर्थने शिवमहिम्नस्तोत्रस्य पद्यमेकं प्रायेणोद्धृतवान्। अस्यानुसारेण वेदैः सांख्ययोगपाशुपतवैष्णवादिभिश्च विभिन्नैः सम्प्रदायैरनेके मोक्षमार्गा विहिताः वर्तन्ते। जनाः स्वरुच्यनुसारेणर्जुकुटिलनानापथजुषो भवन्ति। परन्तु तेऽन्ततोगत्वा परमात्मानमेव प्राप्नुवन्ति यथा विभिन्नाः नद्यः स्यन्दमाना ऋजुकुटिलनाना-पथजुषोऽर्णवमेव यन्ति।[4] अद्वैतवेदान्तस्याचार्यो मधुसूदनसरस्वत्यप्येवंविधं विचारं प्रकटीकुर्वन् स्वग्रन्थे प्रस्थानभेदे कथयति यत् प्रस्थानानां भेदा तलवर्तिन एव। ऋषीणां वचसां सदर्थानवबोधेनैवैते भेदाः प्रादुर्भवन्ति। ऋषीणां सर्वज्ञत्वात् सर्वेषां मोक्षमार्गाणां सम्यक्त्वं मोक्षप्रापकत्वं च। जनानां बहिर्विषयप्रवणत्वादापाततः पुरुषार्थे प्रवेशो न सम्भवतीति नास्तिक्यवारणार्थमृषिभिरेते प्रकारभेदाः

1. न्यायभूषणम्; पृष्ठम् 392.
2. ब्रह्मसूत्रशांकरभाष्यम्; 2.2.1
3. हार्मनी ऑफ रिलीज़न्स; पृष्ठम् 16.
4. ''त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च। रुचीनां वैचित्र्याद् ऋजुकुटिलनानापथजुषां नृणामेको गम्यस्त्वसि पयसामर्णव इव।।''- शिवमहिमस्तोत्र; 7

प्रदर्शिता:।[1] सार्वभौमिकतावादो वस्तुत: सर्वेषां भारतीयधर्मदर्शनानां सारतत्त्वं वर्तते।

भारतीयधर्मदर्शनानां सारतत्त्वं हिन्दुधर्मदर्शनेऽपि द्रष्टव्यम्। हिन्दुधर्मस्तु विभिन्नसम्प्रदायानां सङ्घ एव। सर्वोच्चन्यायलयेनाप्यस्य जीवनपद्धतिविशेषत्वमेव प्रतिपादितं यतो हि प्रायेणैवं मन्यते यद् हिन्दुधर्मोऽपरिभाष्य:। । परन्तु येषां विभिन्नसम्प्रदायानामयं सङ्घो वर्तते तेषां सामान्याधारभूमयोऽपि वर्तन्ते यासामनुसारेण हिन्दुधर्मस्य सम्यगवधारणा स्पष्टीभवति। एता: सन्ति कर्मपुनर्जन्मनी, संसारोऽविद्यामूलको बन्धो ज्ञानमूलको मोक्षश्च।[2] हिन्दुधर्मस्यैता आधारभूमयोऽस्माभि: स्वीकृताश्चेत् बौद्धमतं जैनमतं सिखमतं च सर्वेऽस्मिन्नेव समाविष्टा: स्यु:। यद्यस्मिन् विषये जनजागरणं क्रियते तर्हि समाजे शान्ते: सौहार्द्रस्य च प्रसारो भवेत्। यदि केचन तथाकथितबुद्धिजीविनो भारतेऽसहिष्णुतां पश्यन्ति तर्हि नूनं तैर्विवेकविश्राममभिहितम्। यथा तरम्बुजं बाह्यतोऽनेकविभागभक्तं प्रतीयते परन्तु तस्याभ्यन्तरे सर्वमेकरूपत्वेति। भारतीया संस्कृतिरपि तरम्बुजमिव वर्तते यत्र बाह्यतो विविधमतमतान्तराणां भेद: दृश्यते। परन्तु तस्या अभ्यन्तरे प्रेम्ण: सौहार्द्रस्य च रसेन सिक्तमेकमेव सारतत्त्वं वर्तत इत्यत्र नास्ति कश्चन सन्देह:।

**सन्दर्भग्रन्थसूची**

**मूलसंस्कृतस्रोतांसि**

-----, 1869, *ऋग्वेदसंहिता*, (सं) मैक्समूलर:, लन्दन्।

-----, 2000, 108 *उपनिषद्*, (सं) श्रीरामशर्मा आचार्य:, हरिद्वारम्।

गौडपाद:, 1932, *माण्डूक्योपनिषत्कारिका*, (सं) निखिलानन्द:, अद्वैताश्रम:, कालिकाता।

पाणिनि:, 1993, *अष्टाध्यायी*, (सं) एस्. डी. जोशी जे. ए. एफ्. रूडबर्जेनश्च, साहित्याकादमी, देहली।

पुष्पदन्त:, 2008, *शिवमहिम्नस्तोत्रम्*, (सं) अद्वैताश्रम:, कालिकाता।

बादरायण:, 1984, *ब्रह्मसूत्रम्* (शांकरभाष्यसहितम्), (सं) सत्यानन्द: सरस्वती, वाराणसी।

भासर्वज्ञ:, 1968, *न्यायभूषणम्*, (सं) स्वामियोगीन्द्रानन्द:, वाराणसी।

माधवाचार्य:, 2012, *सर्वदर्शनसंग्रह:*, (सं) उमाशंकरशर्मा ऋषि:, वाराणसी।

वेदव्यास:, 1981, *नारदपुराणम्*, (सं) गणेशवासुदेवटैगोर:, मोतीलालबनारसीदासप्रकाशनम्, देहली।

वेदव्यास:, 2016, *स्कन्दपुराणम्*, (सं) एस्. एन्. खण्डेलवाल:, चौखम्बाप्रकाशनम्, वाराणसी।

सरस्वती, मधुसूदन:, 1918, *प्रस्थानभेद:*, (सं) श्रीवाणीविलासमुद्रणालय:, श्रीरङ्गम्।

**अन्यस्रोतांसि**

चट्टोपाध्याय, डी. पी., 2007, *हिस्ट्री ऑफ साइन्स फिलॉसफी एण्ड् कल्चर इन इण्डियन सिविलाइजेशन्* (खण्ड 15, भाग 1), देहली।

भजनानन्द:, 2008, *हार्मनी ऑफ रिलीज़न्स*, रामकृष्णमिशन्, कालिकाता।

मसीह:, वाई., 1991, *कम्पैरेटिव स्टडी ऑफ रिलीज़न्स*, मोतीलालबनारसीदासप्रकाशनम्, देहली।

शिवदासन्, एस्. एन्, 2000, *ए सोशल हिस्ट्री ऑफ इण्डिया*, ए. एफ्. एच्. पब्लिशिंग कार्पोरेशन, नवदेहली।

श्रीवास्तस्य:, कृष्णचन्द्र:, 1999, *प्राचीन भारत का इतिहास तथा संस्कृति*, प्रयागनगरम्।

सिंह:, ललनप्रसाद:, 1976, *तन्त्र : इट्स मिस्टिक् एण्ड् साइण्टिफिक् बेसिस्*, देहली।

1. ''सर्वेषां प्रस्थानकतॄणां मुनीनां विवर्तवादपर्यवसानेनाद्वितीये परमेश्वरे प्रतिपाद्ये तात्पर्यम्। न हि ते मुनयो भ्रान्ता:; सर्वज्ञत्वात्तेषाम्। किन्तु बहिर्विषयप्रवणानामापातत: पुरुषार्थे प्रवेशो न सम्भवतीति नास्तिक्यवारणाय तै: प्रकारभेदा: प्रदर्शिता:। तत्र तेषां तात्पर्यमबुद्ध्वा वेदविरुद्धेऽप्यर्थे तात्पर्यमुत्प्रेक्षमाणास्तन्मतमेवोपादेयत्वेन गृह्णन्तो जना नानापथजुषो भवन्तीति सर्वमनवद्यम्।'' - मधुसूदनसरस्वतीप्रणीत प्रस्थानभेद; पृष्ठम् 19.
2. कम्पैरेटिव स्टडी ऑफ रिलीज़न्स; आवरणपत्रस्य पृष्ठभाग:।

ISSN - 0974-8946 | शोधप्रभा
**जनवरी-मार्च 2018** | वर्षः 43, द्वितीयाङ्कः

# उपनिषत्सु वाग्विद्योपासना

**डॉ. कृष्णमोहनपाण्डेयः***

भारतीयपरम्परायां वैदिकवाङ्मयस्य ज्ञानकाण्डाख्याता उपनिषदः विश्वम्भरायाः भारतधरायाः प्रतिष्ठाहेतेषु अन्यतमाः। लौकिकपारलौकिकजीवनपद्धत्या परंतत्त्वब्रह्ममोक्षेत्याद्यामुष्मिकविचारगर्भितत्त्वेन प्रसिद्धासु ज्ञानकाण्डात्मकासु एतासु ऐहिकाः देहेन्द्रियमनोविज्ञानलोकविज्ञानसंवलितविषयाः बहुलतयो-पलभ्यन्ते। जिज्ञासाप्रवृत्तिमूलाधायकैश्शाश्वतचिन्तनाधिष्ठितात्मभूतभारतीयैरादिकालादेव पूर्वं समधिगतानां शाश्वताधिभौतिकाधिदैविकाध्यात्मिकोपलब्धीनां संग्रहणात्मिका वेदरहस्यानुगता एता अद्यतनविज्ञानेनाऽपि परीक्षणक्षमाः विराजन्ते। दीर्घकालं यावदौपनिषदमनुभवमननचिन्तनं सर्वमपि परीक्षात्मकं परीक्ष्यकृतं च लेशमात्रामप्यन्धविश्वासमूलकन्नेति जीवब्रह्मतत्त्वैक्यं द्रढयितुमपि सर्वैर्प्राच्यपुष्कलपरम्परा-पोषकैश्चिन्तनशिखरैर्प्रयासो नित्यनिरन्तरं नितरां विहितः। उपनिषदां विचारसरणिः शाश्वतानुगत-परम्परायामद्वैतसिद्धान्ते तत्त्वं पदार्थशोधनेन शुद्धस्वरूपयोः जीवब्रह्मणोरैक्यं गणयितुमशक्ययुक्तयो वादविवादाः नवनवमतोपस्थिताः प्रवर्तिताश्च। एवमेव मानवजीवनादर्शसुखाद्युपलब्धिहेतुभूतमुख्यतत्त्वख्याता उपनिषदो वेदविद्यारहस्यमूलकज्ञानकाण्डत्वादादिकालादेव मानवबुद्ध्याकर्षणकेन्द्रभूताः, सन्दर्भेऽस्मिन्नव-नवोन्मेषप्रतिभाप्रपन्नो महान्दार्शनिकः सर्वपल्लीराधाकृष्णन्महोदय उल्लेखयति उपनिषदः मानवीयप्रगति-शीलविचारधाराया इतिहासे महत्त्वपूर्णं स्थानं प्राप्य विराजन्ते। विशिष्य च उपनिषदां चिन्तनधारा भारतीयानां दार्शनिकचिन्तनस्य, साम्प्रदायिकतायाः, जीवनपद्धतेः, संस्कृतेः, सभ्यतायाः, जीवनमूल्यानां चोपरि त्रिसहस्रवर्षेभ्योऽपि अधिककालात् स्वं प्रभावं सुस्पष्टरूपेण समुपस्थापयति स्म। तात्पर्यमिदं यदलौकिकमदृष्टं पारमिकं परं तत्त्वं ब्रह्मनामकं वर्तते, तस्य रहस्योद्घाटनपूर्वकमत्यन्तं विशदं, युक्तियुक्तकं व्याख्यानम् विदधति रहस्यविद्याख्यातोपनिषदः। सांसारिकाणां सुखसौविध्यार्थं विविधविद्या विहिता मन्त्रद्रष्टाभिः ऋषिभिः। तासु सर्वासु विद्यासु परमपुरुषार्थं प्रकाशनाय परोपकारिणी या विद्या जगत्युपलब्धा विख्याता च सोपनिषद्विद्येति। प्राच्यपरम्परापोषकैर्मनीषिभिः परमार्थतत्त्वचिन्तनप्रेरकाषूपनित्सु विषयेषु नित्यनिरन्तरचिन्तरतानां विषये निगदितमं यत् – **'तत्र को मोहः कः शोक एकत्वनुपश्यतः।'** उपनिषद्विद्या विद्यासु प्रधानतमा। अत एव उक्तम् – 'सा विद्या या विमुक्तये।' भगवता कृष्णेनाऽपि भगवद्गीतायामुक्तम् – 'अध्यात्मविद्या विद्यानाम्।'

विविधासूपनिषत्सु विविधाः विद्याः सूक्ष्मरूपेण विहिताः तासु वाग्विद्योपासनात्र विचार्यते। सरस्वतीरहस्योपनिषदि महर्षिणा आश्वलायनेन सरस्वत्या कथं परासिद्धिः प्राप्ता इति विवेचितम्। तेन निगदितम् यत् – श्रद्धामेधाप्रज्ञाधारणावाग्देवतामहासरस्वतीनाममन्त्रैः अंगन्यासो विधीयते। यथा–

* असिस्टेण्ट प्रोफेसर, स.धा. आदर्शसंस्कृतमहाविद्यालयः, डोहगी, ऊना, हि.प्र.

**ॐ श्रद्धायै नमो हृदयाय नमः, ॐ मेधायै नमः शिरसे स्वाहा,**

**ॐ प्रज्ञायै नमः शिखायै वषट्, ॐ धारणायै नमः कवचाय हुम्,**

**ॐ वाग्देवतायै नमो नेत्रत्रयाय वौषट्, ॐ महासरस्वत्यै नमः अस्त्राय फट्।**

एवमङ्गन्यासं कृत्वा अर्थसिद्ध्यर्थं वेदान्तशस्त्रस्यार्थभूतब्रह्मतत्वमेव यस्याः स्वरूपं तथा विविधनामरूपा सरस्वती देवी मां रक्षत्विति विचिन्त्य मन्त्रमिमं पठेत्–

**ॐ प्रणो देवी सरस्वती वाजेभिर्वाजिनीवती। धीनामवित्र्यवतु।**[1]

दिव्यदानादिगुणशेभायमाना सर्वज्ञानविज्ञानतत्त्वप्रकाषिकाऽन्नसम्पन्ना स्तोतृणामुपासकानां संरक्षिका सरस्वती अस्मानन्नेनाभिवर्तताम्। अभीष्टप्रयोजनसिद्ध्यर्थं सर्वांगोपांगव्यामिश्रवेदेषु यस्याः स्तुतिगानं जगौ या अद्वैतशक्तिरुच्यते –

**ह्रीं आ नोदिवो वृहतः पर्वतादा। सरस्वती यजता गन्तु यज्ञम्।**

**हवं देवी जुजुषाणां घृताची शग्मां नो वाचमुषती शृणोतु।।**[2]

अभिव्यक्तिसम्पादिका सर्वेष्टसाधिका सरस्वती प्रकाष्यमानत्वात् द्युलोकादवतीर्यास्माभिः क्रियमाणं यज्ञं प्राप्नोतु। सा स्तुतिभिः प्रसन्नं सम्भूय स्वेच्छया सम्पूर्णं सुखकरमर्चनं शृणुयात्। इष्टार्थसिद्ध्ये वर्णपदवाक्यानामर्थरूपेण सर्वत्र व्याप्यमानाद्यन्तेनरहितानन्तस्वरूपा वाग्देवी स्तूयते मन्त्रैः–

**श्रीं पावका नः सरस्वती वाजेभिर्वाजिनीवती। यज्ञं वष्टुधियावसुः।।**[3]

अन्नसम्पन्ना सर्वान् पवित्रकारिणी कर्मभिः प्राप्यमाना धनप्रदात्री क्रियमाणेषु यज्ञेषु आगहि। या मध्यमावाणीरूपेण स्थिता मामवतु एवं विचिन्त्य मन्त्रमिमं जपेत् –

**'ब्लूं चोदयित्री सूनृतानां चेतन्ती सुमतीनां यज्ञं दधे सरस्वती'।**[4]

या देवी सदा सर्वदा प्रियं सत्यं च वचनार्थं प्रेरयति, उत्तमबुद्धिक्रियापरायणपुरूषाणां कर्तव्यबोधकारयित्री सा यज्ञमिमं दधे। मधुच्छन्दसा ऋषिणा दृष्टोऽयं मन्त्रः। या समस्तलोकानां नियन्त्रिका रुद्रादित्यादिदेवस्वरूपा सर्वान् प्रचेतयति। यथा मन्त्रोऽयम् –

**सौः महो अर्णः सरस्वती प्रचेतयति केतुना। धिया विष्वा विराजति।।**[5]

अत्र नदीरूपासरस्वती स्तुता। निरन्तरप्रवाहमाना वाणी स्वकीयेन प्रवाहरूपेण कर्मणा अगाधत्वं ज्ञापयति। सैव स्वदेवत्वेन सर्वकर्तव्यविषयकबुद्धिमुद्घाटयति। दीर्घतमा ऋषिणा मन्त्रोऽयं लोकेष्टसिद्ध्यर्थं प्रदत्तः। प्राप्तान्तर्दृष्टिप्राणिभिर्या विविधरूपाभिव्यक्तेनानुभूयते या विविधेषु शास्त्रेषु परिमिता सा

1. ऋग्वेदः, 6.61.4
2. ऋग्वेदः, 5.43.11
3. ऋग्वेदः, 1.3.10
4. ऋग्वेदः, 1.3.11
5. ऋग्वेदः, 1.3.12

परापश्यन्तीमध्यमावैखरीति नाम्ना मनीषिभिः कथ्यते। चत्वारीमानि पदानि हृद्गुहायां स्थितानीति विद्वद्भिः ज्ञापितानि। तानि कथमपि बहिर्नायन्ति। किन्तु केचन उच्चारयन्त्यत् वैखरीं वाणीं मानवाः उच्चारयन्ति। सरस्वती रहस्योपनिषदि मन्त्रोऽयं ग्रथितः यत् -

**चत्वारि वाक्परिमितापदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।**
**गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति॥**[1]

सरस्वतीदेव्याः नामजात्यादिभेदैः अष्टधा स्तुतिर्गीयते। अतएव सा निर्विकल्परूपाभिव्यक्ता। सपर्युषणं सर्वदाभिनन्दनीया दिव्यातिदिव्याप्रकाषमानादेवानामानन्ददात्री अमिताणामज्ञानीनां कृते ज्ञानप्रदात्री यज्ञासीनाचतुर्दिगन्नप्रसारिका वाग्देवीमध्यमारूपा श्रेष्ठा इति जगदुः। रहस्यमिदमुद्घाटयन् मन्त्रोऽयं दृष्यते -

**यद्वाक्वदन्त्यविचेतनानि राष्ट्रीदेवानां निषसाद मन्द्रा।**
**चतस्रूर्ज दुदुहे पयांसि क्वस्विदस्याः परमं जगाम॥**[2]

व्यक्ताव्यक्तस्वरूपा देवैः मनुष्यैः सर्वदोच्चारिता सर्वेष्टकामधेनुसमपदप्रदात्री विविधाभिनन्दनीया वाग्देवी अस्मान्रक्षत्विति प्राच्यैः ऋषिभिरित्यभिलषितम्। प्रसिद्धोऽयं मन्त्रः अवलोक्यते -

**देवीं वाचमजयन्त देवास्तां विष्वरूपाः पषवो वदन्ति।**
**सा नो मन्द्रेषमूर्ज दुहाना धेनुर्वागस्मानुपमुष्टुतैतु॥**[3]

आषयोऽयमभिलक्ष्यते यत् प्राणस्वरूपैर्देवैः या वैखरीस्वरूपा वाणी जायमाना सैव प्राणिभिरूच्यते विविधस्तुतिभिः। वाग्रूपा सा भगवती अस्मान् पावयतु। सैव ब्रह्मविद्यारूपा ज्ञायते योगिभिः। तस्याः प्रभावेणैवलोकबन्धनाद्विमुच्यते परं पदं च लभते। श्रूयते सन्दर्भेऽस्मन्मन्त्रः -

**उतत्वः पष्यन्न ददर्श वाचमुतत्वः शृणवन्न शृणोत्येनाम्।**
**उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उषती सुवासाः॥**[4]

अर्थात् केचन वाचं पश्यन्नपि न पश्यन्ति शृण्वन्नपि न शृण्वन्ति। सा सरस्वती यमधिकारी मन्यते तमेव स्वरूपं प्रकटयति। एवं साऽखिलप्रपंचसंरक्षिका योगिभिरवलोकिता साक्षात्कारकर्तु ध्यायते योगिभिः। मन्त्रोऽयं दृष्यते -

**द्वे अम्बितमे नदीतमे देवितमे सरस्वती।**
**अप्रषस्ता इव समसि प्रशस्तिमम्ब नस्कृधिः॥**[5]

एवं कल्पकल्पान्तरे ब्रह्मणाभिजायमाना श्वेतकान्तिसंयुक्ता वाग्देवी मनसि नित्यं विहरतु। विविधेषु लोकेषु रमणीया सर्वदा आनन्ददात्री शारदा अस्माभिः नित्यमर्च्यते। हे ज्ञानप्रदात्री

1. ऋग्वेदः, 1.164.45
2. ऋग्वेदः, 8.100.10
3. ऋग्वेदः, 8.100.11
4. ऋग्वेदः, 10.71.4
5. ऋग्वेदः, 2.41.16

चतुर्विधाक्षसूत्राङ्कुशपाशपुस्तकधारिणी मुक्ताहारशोभायमाना दिव्यातिदिव्या देवी मम वाण्यां निवसतु। षक्त्खसदृषी सुमधुरकण्ठकोकिला वाणी विद्वत्सु कश्यचिदेव पार्श्वे स्वत्वमुद्घाटयति केचन एव तस्याः मर्मान्तिकभावानां ग्रहणं कुर्वन्ति। षब्दार्थचारुप्रपंचकाः तस्याः विविधरूपाः प्रकल्पिताः श्रूयतेऽस्मिन्सन्दर्भे मन्त्रः –

**उतत्वं सख्ये स्थिरपीतमाहुर्नैनं हितवन्त्यपि वाजिनेषु।**
**अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम्॥**[1]

दिव्यज्ञानप्रवाहिकया तया सह भिन्नभावकल्पाः किमपि न लभन्ते। सः शृणोत्यलकं शृणोति सत्कर्ममार्ग न जानाति, एका श्रुतिः श्रूयते –

**यस्तिव्याजसचिविदं सखायं न तस्य वाच्यापि भागोऽस्ति।**
**यदीदं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य पन्थाम्॥**[2]

वैदिकऋषिः अङ्गिरसः मन्त्रमेकं दृष्टवान्। मन्त्रानुसारेण ऋषयो यज्ञेन वागभिप्रायं जानन्ति। तत्त्वज्ञा ऋषयः अन्तःकरणे तां स्थाप्य तस्यां सर्वं स्वरूपमनुभवन्ति। पुनः विविधेषु छन्दस्सु तं ज्ञानमुद्घाटितवन्तः। सान्दर्भिकमन्त्रोऽयम् –

**यज्ञेन वाचः पदवीयमायन्तामनविन्दन्नृषिषु प्रविष्टम् ।**
**तामाभृत्या व्यदधुः पुरुत्रा तां सप्तरेभा अभि संनवन्ते॥**[3]

सा सरस्वती प्रत्यग्दृष्टिभिर्जीवैर्व्यज्यमानानुभूयते। सर्वत्र व्यापिनी ज्ञाप्तिरूपैका वाग्देवी मनीषिभिः स्तूयते। तां व्यक्ताव्यक्तस्वरूपां सर्वे वेदाद्या व्याहरन्ति। तां गुह्यातिगुह्योद्भावकां मत्वाखिलं बन्धं निर्मथ्याखिलवर्त्मना परं स्वरूपं स्थानञ्च प्राप्नोति योगीति स्मर्य्यते। मन्त्रोऽयं दृष्टः –

**यां विदित्वाऽखिलं बन्धं निर्मथ्याखिलवर्त्मना।**
**योगी याति परं स्थानं सा मा पातु सरस्वती॥**[4]

तां ब्रह्मस्वरूपां मत्वा जगति प्राणिनः तस्यामावेश्य ध्यायन्ति। सा चतुर्मुखाम्भोजवहनहंसा सर्वशुक्ला सरस्वती नित्यं मानसे रमत्विति अर्च्यते। सैव सर्वत्र विद्यादानार्थं प्रार्थ्यते। हे कम्बुकण्ठी सुताम्रोष्ठी सर्वाभरणभूषिता जिह्वाग्रे सन्निविश्यतां श्रद्धाधारणामेधाविधिवल्लभा वाग्देवी भक्तजिह्वाग्रसदना शमादिगुणदायिनी यामिनी कृतकुन्तलाभवानी भवसन्तापनिर्वाणसुधानीधि भक्तैर्नित्यं गीयते भक्ति–श्रद्धाभियुक्तेभ्यो वाणी स्वेच्छया गद्यपद्यात्मकैः शब्दैरप्रमेयैर्विविक्षितैः प्रवर्तते। अश्रुतो बुध्यते ग्रन्थः प्रायः सारस्वतः कविः। एवं सर्वदा तस्या आस्थायां रता वदन्ति –

**आत्मविद्या मया लब्धा ब्रह्मणैव सनातनी ।**
**ब्रह्मत्वं मे सदा नित्यं सच्चिदानन्दरूपतः॥**[5]

2. ऋग्वेदः, 10.71.5
3. ऋग्वेदः, 1071.6
4. ऋग्वेदः, 10.71.3
5. ऋग्वेदः, 10.72.1
5. सरस्वतीरहस्योपनिषत्, 31

उपनिषद्युक्तम् -

**प्रकृतित्वं ततः स्पृष्टं सत्त्वादिगुणसाम्यता।**
**सत्यया भाति चिच्छाया दर्पणे प्रतिबिम्बिवत्॥**[1]

सत्त्वरजतमरूपात्मिका त्रिगुणा समप्रकृत्या रचिता। तस्यां प्रकृत्यां चेतनप्रतिबिम्बत्वेन प्रकृतिः त्रिविधा गण्यते । प्रकृतियोगाच्छरीरं लभते । सत्त्वगुणप्रकृतिः माया इति मन्यते -

**शुद्धतत्त्वप्रधानायां मायायां बिम्बितो ह्यजः।**
**सत्त्वप्रधानाप्रकृतिर्मायेति प्रतिपाद्यते॥**[2]

**सा माया स्वशोपाधिः सर्वज्ञस्येश्वरस्य हि।**
**वश्यमायत्वमेकत्वं सर्वज्ञत्वं च तस्य तु॥**[3]

माया परवशा किन्तु तस्या नियन्त्रणमावश्यकम्। ब्रह्मणो मुख्यलक्षणमद्वितीयत्वं सर्वज्ञत्वमत एव सात्त्विकत्वात् समष्टित्वात् साक्षित्वाज्जगतामपि जगत्कर्तुमकर्तुं वा चान्यथा कर्तुमीशते । अत एव सः ब्रह्मस्वरूपेश्वरः सर्वज्ञत्वादिभिर्गुणैर्व्यामिस्रः। मायायाः शक्तिर्द्विविधा कथ्यते विक्षेपावरणरूपात्मिका। एतयोः शक्तयोर्विक्षेपशक्तिर्लिङ्गादिब्रह्माण्डपर्यन्तं जगत् सृजति। तथा आवरणशक्तिरन्तङ्ग्र्दृश्ययोर्भेदं बहिश्च ब्रह्मसर्गयोरावृणोति। एषैव संसारस्य कारणमुच्यते। ततः -

**साक्षिणः पुरतो भातं लिङ्गदेहेन संयुक्तम्।**
**चित्तिच्छायासमावेशाद्जीवाः स्याद् व्यावहारिकः॥**[4]

**अस्य जीवत्वमारोपात्साक्षिण्याप्यवभासते।**
**आवृतौ तु विनष्टायां भेदे भातेऽप्याति तत्॥**[5]

आवरणशक्तिब्रह्मसर्गयोर्भेदस्वरूपं परिख्रश्यते। जीवत्वभावो नश्यति। ततः ब्रह्मसर्गयोर्भेदावृत-शक्तिवशात् विकारो न दृश्यते। आवरणछिन्नत्वात् ब्रह्मसर्गयोर्भेदप्रतीतिर्जायते किन्तु विकारस्थितौ ब्रह्मणि न भवति केवलं सृष्ट्यामेव भवति। ततः अस्ति भातिप्रियरूपानामांशपञ्चसु अस्ति भाति प्रियमिति ब्रह्मस्वरूपं तथा नामरूपं विश्वरूपात्मकं जगदिति। यदा द्वयोः सम्बन्धो भवति तदा ब्रह्मविश्वेऽस्मिन् स्थितो भवति। मन्त्रोऽयं श्रूयते -

**अस्तिभातिप्रियरूपं नामचेत्यंशपञ्चकम् ।**
**आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम॥**
**अपेक्ष्यनामरूपे द्वे सच्चिदानन्दतत्परः।**[6]

1. सरस्वतीरहस्योपनिषत्, 46
2. सरस्वतीरहस्योपनिषत्, 47
2. सरस्वतीरहस्योपनिषत्, 49
4. सरस्वतीरहस्योपनिषत्, 50
5. सरस्वतीरहस्योपनिषत्, 54
6. सरस्वतीरहस्योपनिषत्, 58

सद्व्यवहाररतानां पारमिकलक्ष्यनिरतानाङ्कृते सविकल्पकसमाधिरेव द्विविधो विहितः बाह्याभ्यन्तरप्रकृतित्वात्। कामाद्याश्चित्तगादृष्यषब्दानुभेदेन सविकल्पः पुनः द्विधा सविकल्पकसमाधिरेव व्याख्यायते यत् -

**कामाद्याश्चित्तगा दृश्यास्तत् साक्षित्वेन चेतनम् ।**
**ध्यायेद् दृश्यानुविद्धोऽयं समाधिः सविकल्पकः॥**[1]

येन चित्ते कामादिविकाराणामुत्पत्तिर्जायते ते विकारा दृष्टाः चेतनः साक्षी भवति तस्य। अत एव दृश्यानुविद्धसविकल्पकसमाधिर्निगद्यते योगिभिः। शब्दानुविद्धसमाधौ साधकः चिन्तयति यदहमद्वैतस्वरूपः सङ्गरहितः स्वप्रभः सच्चिदानन्दः।

**स्वानुभूतिरसावेशाद् दृश्यशब्दाद्यपेक्षितुः।**
**निर्विकल्पकसमाधिः स्यान्निवातस्थितदीपवत्॥**[2]

दृष्टान्तमिदं दीयते यद् निवातस्थितदीपकसख्रशोऽविचलस्थितिसाधको भवति। एवं हृदये द्विविधः समाधिः कथ्यते। एवं यथा हृदये समाधिस्थितिरनुभूयते तथैव बाह्यदेशेऽपि दृश्यते। यथा -

**हृदीव बाह्यदेशेऽपि यस्मिन्कश्मिंश्च वस्तुनि ।**
**समाधिराधसन्मात्रान्नामरूपपृथक्कृतिः ॥**[3]

अर्थाद् बाह्यवस्तुविशेषं प्रति चित्तस्थितिः समाधिः। द्रष्टादृश्यज्ञानात्। श्रयभूतश्चेतनः चिन्त्येवमेषः परा समाधिः। पुनः चैतन्यरसानुभूतित्वादनावेशेण स्तब्धीभावः तृतीयसमाधिः। वाग्देव्याः सरस्वत्या एवविधोपासका उक्तसमाधौ जीवनमर्पयति शरीराभिमानं नश्यति। परमात्मतत्त्वज्ञानं लब्ध्वा मनः यत्र-यत्र स्थापयति तत्रामृतत्वमनुभवति। सुखं प्राप्नोति । पुनः -

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।**
**क्षीयते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥**[4]

अतः कलायुक्तकलारहितब्रह्मस्वरूपसाक्षात्कारकर्तृत्वेन कर्मक्षयो भवति जीवेश्वरत्वाभेदं नश्यति पुनः स मुक्त इति निश्चितम् । उक्तमन्ते -

**मयि जीवत्वमीशत्वं कल्पितं वस्तुतो न हि।**
**इति यस्तु विजानाति स मुक्तो नात्र संशयः॥**[5]

एवं लौकिकपारलौकिकमानन्दं प्रदायित्री सा वाग्देवी पूर्वैरर्वाचीनैश्च सर्वाभिर्ज्ञानपिपासकैः सर्वदा स्तुता। तयैव मनः ज्योतिषां ज्योतिर्भवति, इन्द्रियाणां प्रकाशकं भवति। अतएव सा श्रद्धया स्तोतव्या।

---

1. सरस्वतीरहस्योपनिषत्, 61 2. सरस्वतीरहस्योपनिषत्, 63 3. सरस्वतीरहस्योपनिषत्, 64
4. सरस्वतीरहस्योपनिषत्, 67 5. सरस्वतीरहस्योपनिषत्, 68

ISSN - 0974-8946 **शोधप्रभा**
**जनवरी-मार्च 2018** वर्षः 43, द्वितीयाङ्कः

# भारतीयवाङ्मये मायास्वरूपम्

**श्रीकुलदीपपैन्यूली**

मायावादः अद्वैतवेदान्तस्य प्रमुखः सिद्धान्तः। इयं माया, अविद्या, अज्ञानम्, अव्यक्तम्, प्रकृतिः, तमस्, मिथ्याज्ञानम्, मिथ्यात्वं, विपर्ययः, मोहः, अग्रहणम् इत्यादि नामभिरपि अभिहिताऽस्ति। एतेषु माया अज्ञानम् अविद्या च प्रमुखानि नामानि। कतिपयैराचार्यैः अविद्या त्रिगुणात्मिका ब्रह्मणा तथा च माया जीवेन सह सम्बन्धितः अस्ति इति उच्यते। वेदान्तशास्त्रानुसारं 'अज्ञानं तु सदसद्भ्यामनिवर्चनीयं त्रिगुणात्मकं ज्ञानविरोधिभावरूपं यत्किञ्चिदिति वदन्त्यहमज्ञ इत्याद्यनुभवात्, देवात्मशक्तिं स्वगुणैर्निगूढाम् इत्यादिश्रुतेश्च।'

अस्यायं तावदभिप्राय यत् अज्ञानं माया वा न सद्रूपा न च असद्रूपा न पुनः सदसदुभयात्मिका अपि तु सा अनिर्वचनीयाः, त्रिगुणात्मिका[1], ज्ञानविरोधी, भावरूपा यत्किञ्चिच्चास्ति। अस्याज्ञानस्य स्वरूपं ज्ञातुं तद्विशेषणानां पर्यालोचनमपेक्षते, तस्मात्तदधस्तात्क्रियते।

अज्ञानं माया वा अनिर्वचनीया एतदज्ञानमात्मज्ञानादनन्तरं निवर्तते दीपकेनान्धकारवत्, तस्माद् ब्रह्म इव इदं न सद्रूपम्। पुनश्च अहमज्ञः, अहं न जानामि इति व्यावहारिकप्रयोगात् न बन्ध्यापुत्र इव असद्रूपा। तस्माद् सदसद्भ्यां भिन्नत्वादिदमनिर्वचनीयमिति इत्युच्यते।

**'इन्द्रो मायाभिः पुरुरूप ईयेत।'**[2] इति

**तेन मायासहस्रं तच्छम्बरस्याशुगामिना।**
**बालस्य रक्षता देहमेकैकांशेन सूदितम्।।**[3]

विचित्रार्थसर्गसमर्थस्य पारमार्थिकस्यैवासुराद्यस्त्रविशेषस्यैव मायाशब्दाभिधेयत्वोपालम्भात्। अतो न कदाचिदपि श्रुत्याऽनिर्वचनीयाज्ञानप्रतिपादनम्। नाप्यैक्योपदेशान्यथानुपपत्त्या तत्त्वपदयोः सविशेषब्रह्माभिधायित्वेन विरुद्धयोर्जीवपरयोः स्वरूपैक्यस्य प्रतिपत्तुमशक्यतयाऽर्थापत्तेरनुदयदोषदूषितत्वात्। 'तदैक्षत बहुस्यां प्रजायेय'[4] इत्यादिषु तस्यैव प्रकृतत्वात्। तत्समानाधिकरणं त्वं पदं चचिद्विशिष्टजीवशरीरकं ब्रह्माचष्टे। प्रकारद्वयविशिष्टैकवस्तुपरत्वात् सामानाधिकरण्यस्य।

---

* शोधच्छात्रः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली-110016

1. सांख्यदर्शनस्येतिहासः
2. ऋग्वेदः 6/47/18
3. विष्णुपुराणम् 1/19/20
4. छान्दोग्योपनिषद् 6/2/3

**'तत्त्वमसि'**[1] लक्षणाऽद्वैतपक्ष: 'सोऽयं देवदत्त' इतिवत् तत्त्वमिति पदयोर्विरुद्धभागत्यागलक्षणया निर्विशेषस्वरूपमात्मैक्यं सामानाधिकरण्यार्थ: किं न स्यात्। यथा सोऽयमित्यत्र देशान्तरकालान्तरसम्बन्धीपुरुष: प्रतीयते। इदं शब्देन च सन्निहितदेशवर्तमानकालान्तरसम्बन्धी। तत्रैकस्य युगपद्विरुद्धदेशकालप्रतीतिर्न सम्भवतीति द्वयोरपि पदयो: स्वरूपपरत्वे स्वरूपस्य चैक्यं प्रतिपत्तुं शक्यम्। एवमत्रापि किञ्चिज्ज्ञत्वसर्वज्ञत्वादि-विरुद्धांश-प्रहाणेनाखण्डस्वरूपं लक्ष्यत इति चेत्।

**माया विक्षिपदज्ञानमीशेच्छावशवर्ति वा।**
**अविद्याच्छादयत्तत्त्वं स्वातन्त्र्यानुविधायि वा॥**

मायायाऽर्थम्

**प्रपञ्चो यदि विद्यते निवर्तेत न संशय:।**
**मात्रामात्रमिदं द्वैतमद्वैतं परमार्थत:॥**[2]

वचनाद् द्वैतस्य कल्पिततत्वमवगम्यत इति चेत्सत्यम्। भावमनभिसंधायाभिधानात्। तथा हि यद्ययमुत्पद्येत तर्हि निवर्तेत न संशय:। तस्मादनादिरेवायं प्रकृष्ट: पञ्चविधो भेदप्रपञ्च:। न चायमविद्यमान:। मात्रामात्रत्वात्। मायेति भगवदिच्छोच्यते।

**महामायेत्यविद्येति नियतिर्मोहिनीति च।**
**प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यते॥**

**प्रकृति: प्रकृष्टकरणाद्वासना वासयेद्यत:।**
**अ इत्युक्तो हरिस्तस्य मायाविद्येति संज्ञिता॥**

**मायेत्युक्ता प्रकृष्टत्वात्प्रकृष्टे हि मयाभिधा।**
**विष्णो: प्रज्ञप्तिरेवैका शब्दैरेतैरुदीर्यते॥**

सैव प्रज्ञा मानत्राणकर्त्री च यस्य तन्मायामात्रम्। ततश्च परमेश्वरेण ज्ञानत्वाद्रक्षितत्वाच्च न द्वैतं भ्रान्तिकल्पितम्। न हीश्वरे सर्वस्य भ्रान्ति: संभवति। विशेषादर्शननिबन्धनत्वाद् भ्रान्ते:। तर्हि तद्व्यपदेश: कथमित्यत्रोत्तरमद्वैतं परमार्थत इति। परमार्थत इति परमार्थापेक्षया। तेन सर्वस्मादुत्तमस्य विष्णुतत्त्वस्य समभ्यधिकशून्यत्वमुक्तं भवति।

अयमाशय:- जीवसाक्षी तावदङ्गीकर्तव्य:। अन्यथा विषयानुसन्धानानुत्पत्ते:। न चान्यथोपपत्ति: चक्षुरादि-करणतज्जन्यज्ञानानां नानात्वेनाननुगततया सर्वविषयानुसन्धातृत्वायोगात्। प्रमातुश्चानुगतत्वेऽपि स्वानुसन्धा-नार्थमन्यापेक्षत्वात्। साक्षिणस्तु ब्रह्माभेदेन स्वप्रकाशतया निरपेक्षस्यैव स्वपरविषयानुसन्धानोपपत्ते:। ननु जीवसाक्षिणो ब्रह्माभेदेन स्वप्रकाशत्वे तद्वदेव सर्वविषयानुसन्धातृत्वापत्तौ चैत्रावगते मैत्रस्याप्यनुसन्धानप्रसङ्ग इति चेत्किं मैत्रसाक्षिणश्चैत्रावगतविषयानुसन्धातृत्वं स्वप्रकाशचैतन्याभेदादापाद्यते सर्वज्ञवादिविशिष्टचैतन्याभेदाद्वा चैत्रोपहितचैतन्याभेदाद्वा। नाद्य: तस्य निर्विकारित्वेन तदभेदस्य सर्वविषयानुसन्धानानापादकत्वात्। न द्वितीय:, अन्त:करणोपहितस्य जीवसाक्षिण: परमेश्वरेण मायाविशिष्टेन तदुपहितेन वाऽत्यन्तभेदाभ्युपगमात्।

1. ईशावाश्योपनिषद्-1/16
2. माण्डूक्यकारिका 1/17

केयं माया नाम, यदुपहितं चैतन्यमीश्वरसाक्षि स्यात्। न तावन्मिथ्याज्ञानतत्संस्कारकर्माणि तेषां सादित्वेनानादीश्वरोपाधित्वाभावात्। नापि ज्ञानप्रागभावः, तस्यानादित्वेऽपि नानात्वेन तदुपाधित्वायोगात्। अन्यथेश्वरतत्साक्षिणोरप्येनकत्वापत्तेः। अनादिभावरूपाज्ञानं मायेति चेत् न, लक्षणाभावेन तस्य दुर्निरूपत्वात्। तथा हि किं तल्लक्षणं ज्ञाननिवर्त्यत्वम्, अनादित्वे सति तत्त्वं वा, अनादिभावत्वविशेषितमेतदेव वा, अन्यद्वा। नाद्यः प्रथमधारावाहिकबुद्धौ भ्रान्तिज्ञाने चातिव्याप्तेः। न द्वितीयः, प्रागभावेऽपि तत्सत्त्वात्। न तृतीयः, अविद्यासम्बन्धादावतिव्याप्तेः। नान्त्यः, तस्यानिर्वचनात्। न च निखिलकार्योपादानत्वं तल्लक्षणमात्मनोऽपि मायावच्छिन्नस्य तव मते प्रपञ्चोपादानत्वेन तत्र तत्प्रसङ्गात्। नाप्येवंविधाज्ञाने प्रमाणं पश्यामः। न च न जानामीत्यनुभवः तस्य मतद्वयसम्मतज्ञानाभावविषयत्वेनोपपत्तेः। न च 'ब्रह्मसाक्षात्कारः अज्ञाननिवर्तकः तत्त्वसाक्षात्कारत्वात् शुक्तितत्त्वसाक्षात्कारवत्' इत्यनुमानं मूलाज्ञाने मानमिति वाच्यम्, विवेकाग्रहस्य मिथ्याज्ञानस्य वा शुक्तित्वापरोक्षज्ञाननिवर्त्यत्वेन दृष्टान्तासम्प्रतिपत्तेः, प्रागभावनिवृत्त्यार्थान्तराच्च। तस्माल्लक्षणप्रमाणयोरसम्भवान्नास्त्यतिरिक्तमज्ञानमिति उच्यते। अनाद्युपादानत्वे सति ज्ञाननिवर्त्यमज्ञानम्। न चासम्भवः, प्रागभाववदनादेरप्यज्ञानस्य ज्ञाननिवर्त्यत्वे बाधकाभावात्। नाप्यतिव्याप्तिः आत्मनोऽनाद्युपादानत्वेऽपि ज्ञानानिवर्त्त्यत्वात्, तन्निवर्त्यस्य चाविद्या सम्बन्धादेरनुपादानत्वात्, घटाद्युपादानस्य मृत्पिण्डादेरनादित्वाभावात्।

**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते।**[1]

अत एवैकमुक्तावपि अन्येषां प्रपञ्चोपलम्भः, विपर्ययादिप्रपञ्चोपादानमायाया अनिवृत्तेः। न चैवं मुक्तस्यापि प्रपञ्चोपलम्भापत्तिः, प्रपञ्चदर्शनहेत्वविद्याया विच्छेदात्। नहि चक्षुष्मता रूपं गृह्यत इत्यन्धेनापि तदालोक्यते, तस्मादस्ति मायाविद्ययोर्भेद इति तन्न। मायायाः सत्यत्वे अद्वैतहानात् मिथ्यात्वेन च ज्ञाननिवर्त्यत्वमज्ञानत्वात्। 'मायामेतां तरन्ति ते' इत्यादौ तरणं विनाश एव, अन्यथा 'भूयश्चान्ते विश्वमाया निवृत्तिः' इत्यादि श्रुतिविरोधात्। तस्मात् मूलाज्ञानस्यैव मायात्वात् सुष्ठूक्तं मायोपहितं चैतन्यमीश्वरसाक्षि इति।

**मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।।**[2]
**तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते।**
**योगी मायाममेयाय तस्मै विद्यात्मने नमः।।**[3]

इत्यादिषु श्रुतिषु एकवचनबलेन लाघवानुगृहीतेन मायाया एकत्वं निश्चीयते। ततश्च तदुपहितं चैतन्यमीश्वरसाक्षि, तच्चनादि तदुपाधेर्मायाया अनादित्वात्। मायावच्छिन्नं चैतन्यं परमेश्वरः। मायाया विशेषणत्वे ईश्वरत्वमुपाधित्वे साक्षित्वमितीश्वरत्वसाक्षित्वयोर्भेदः, न तु धर्मिणोरीश्वरसाक्षिणोर्भेदः।

1. श्रीमद्भगवद्गीता-7/14
2. श्वेताश्वतरोपनिषद् 4/10
3. श्वेताश्वतरोपनिषद् 4/5

ISSN - 0974-8946 **शोधप्रभा**
**जनवरी-मार्च 2018** वर्षः 43, द्वितीयाङ्कः

# सांख्यदर्शने तत्त्वविवेचनम्

**श्रीसंदीपपैन्यूली**

महर्षिकपिलः सांख्यदर्शनस्य मूलप्रवर्त्तकः। सांख्यदर्शनं प्राचीनतमं दर्शनमस्ति। सांख्यदर्शनस्य प्राचीनता सर्वेषु दर्शनेषु मध्ये दृग्गोचरी भवति[1]। सांख्यदर्शनस्य मूलग्रन्थः तत्त्वसमासनामकः प्राचीनतमत्वेन समुपलभ्यते। सांख्यशास्त्रस्य तत्त्वं सुविस्तृतरूपेण बोधयितुं सांख्यसूत्रनामको विशदग्रन्र्थतः लिखितः। तत्त्वसमाससूत्राणां स्पष्टीकरणायैव सांख्यसूत्राख्यग्रन्थो रचितः। अस्य नाम सांख्यप्रवचनभाष्यमिति प्रसिद्धं वर्तते।

यद्यपि सांख्ये परमार्थतः द्वे तत्त्वे प्रकृतिपुरुषौ स्वीक्रियेते। परम्प्रकृतेः क्रमशः परम्परया च महदादि पृथिव्यन्तानि त्रयोविंशतितत्त्वानि प्रादुर्भवन्ति। सर्वमाहत्य सांख्यदर्शने पञ्चविंशतितत्त्वानि स्वीकृतानि। लिखितञ्चापि-

**पञ्चविंशतितत्त्वज्ञो यत्र तत्राश्रमे वसेत्।**
**जटीमुण्डी शिखी वाऽपि मुच्यते नात्र संशयः॥[2]**

इत्थं सांख्यदर्शनतत्त्वज्ञानेन दर्शनशास्त्रास्य परं लक्ष्यं कैवल्यमेवेति निश्चितम्। सांख्यदर्शने कैवल्यमपि द्विविधं स्वीक्रियते, जीवन्मुक्तिः विदेहमुक्तिश्चेति।

**नास्ति सांख्यसमं ज्ञानं, नास्ति योगसमं बलम्।**
**अत्र वः संशयो माभूज्ज्ञानं साङ्ख्यं परं मतम्॥[3]**

'संख्यावान् पण्डितः कविः'[4] सम्यक्ख्यानं सङ्ख्या सा यस्मिन् वर्तते तत् साङ्ख्यम्। इत्यादीनि वचांसि स्वाभाविकरूपेणैव तत्त्वजिज्ञासूनां चेतांसि सांख्यं प्रति समाकर्षयन्ति। साङ्ख्यशब्देन व्यपदिश्यमानं तत्त्वज्ञानमिदं यत्र यत्र ग्रन्थरत्नेषु विकीर्णं प्राप्यते। उपर्युक्तं वचनञ्चापि सांख्यदर्शनस्य सुविशिष्टं महत्त्वं प्रतिपादयति, तच्च महाभारतस्य शान्तिपर्वण्येव समुपलभ्यते। महाभारते शान्तिपर्वणि नवत्यधिकद्विशततमेऽध्याये सुविस्तृतरूपेण साङ्ख्यस्य महत्त्वं प्रतिपाद्यते। भारतीय-आस्तिकदर्शनेषु

---

* शोधच्छात्रः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली-110016

1. सांख्यदर्शनस्य इतिहासः पृष्ठ 46
2. पुराणपर्यालोचनम्, षष्ठपरिच्छेदः, पृ. 355
3. महाभारतम्, शान्तिपर्वणि, 316/2
4. अमरकोषे

साङ्ख्यदर्शनस्य अतीव सुविशिष्टं स्थानं वर्तते, अस्य शास्त्रस्य मूलप्रवर्तकः आचार्यः कपिलः समभवन्। साङ्ख्यशब्दस्य व्युत्पत्तिः सङ्ख्याशब्देनैवाभूत्, प्रायः गणनार्थकः सङ्ख्याशब्देव साङ्ख्यशास्त्रस्य व्युत्पत्तिकारको वर्तते। साङ्ख्यस्य व्युत्पत्तिविषये लिखितमस्ति यत् –

**'सङ्ख्यायन्ते गण्यन्ते तत्त्वानि येन तत् सांख्यम्'**।[1]

अर्थात् यस्मिन् शास्त्रे दर्शने वा प्रकृतेः पुरुषपर्यन्तं तत्त्वानि परिगण्यन्ते तच्छास्त्रं साङ्ख्यमित्यभिधीयते। सम्यगात्मबुद्धिस्तां प्राप्तवतां ब्रह्मचर्यादेव कृतसन्यासानां वेदान्तविज्ञानसुनिश्चितार्थानां ज्ञानभूमिमारूढानां शुद्धान्तःकरणानां साङ्ख्यानाम्।

पञ्चविंशतितत्त्वात्मिका संख्या यत्र विविच्यते तदेव सांख्यमिति। पञ्चविंशतितत्त्वानां विचारः सांख्यं तमधिकृत्य कृतो ग्रन्थः सांख्यमुच्यते **( रामतीर्थमहाचार्य )** प्रसंख्यानाय तत्त्वानां समन्तादात्मदर्शने[2] संख्यां प्रकुर्वते चैव प्रकृतिं च प्रचक्षते[3] सांख्यै संख्यातासंखेये।[4]

प्राचीनार्षग्रन्थेषु बहुकृत्वः समुल्लिखितः सांख्यदर्शनस्य महिमा समासतः पर्यालोच्यते। सांख्यशास्त्रं महर्षिणाऽऽदिविदुषा कपिलेन प्रवर्तिममिति न कस्यापि तिरोहितम्। स तु महर्षिः कपिलः श्रुतिष्वपि परमादरेण स्तुत इत्यहो ऋषेरस्य लोकातिशायी महिमा। यथा च श्रूयते श्वेताश्वतरोपनिषदि–

**'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानेर्विभर्ति जायमानञ्च पश्येत्'**[5] इति।

महाभारतस्य सारभूतायां श्रीमद्भगवद्गीतोपनिषद्यपि सांख्यशास्त्रं सुमहता समादरेण समुल्लिखितम्। यथा–

**एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु।**[6]
**एकं सांख्यं च योगं च यः पश्यति स पश्यति।**[7]
**अन्ये सांख्येन योगेन कर्मयोगेन चापरे।**[8]

गीतायां विशेषेण सांख्यशास्त्रस्य प्रशंसा नास्ति किन्तु सामान्यतया आत्मज्ञानस्यैव महिमा श्रीभगवता कीर्तितेति, तथापि तत्र सांख्येत्यस्य परमार्थज्ञानेन सह पर्यायतया परोक्षतः सांख्यस्यैव गौरवमङ्गीकर्तुं शक्यते।

---

1. सांख्यदर्शनस्य इतिहासः
2. श्रीमद्भागवतम् 3.14.12
3. अहिर्बुध्न्यसंहिता
4. चरकसंहितायाम्
5. श्वेताश्वतरोपनिषद् 5.2
6. श्रीमद्भगवद्गीता 2.39
7. श्रीमद्भगवद्गीता 5.5
8. श्रीमद्भगवद्गीता 13.24

**'शुद्धात्मतत्त्वविज्ञानं साङ्ख्यमित्यभिधीयते'।**

वस्तुतस्तु समुपसर्गपूर्वकात् चक्षिङ्ख्याधातोः सङ्ख्याशब्दो निष्पद्यतेऽतएवास्य तात्पर्यतत्वज्ञानमेव भवति। सम्यक् ख्यानं तत्त्वज्ञानविवेचनं सङ्ख्या सा यस्मिन् शास्त्रे वर्तन्ते तच्छास्त्रमेव साङ्ख्यम्भवतीति शास्त्रस्यास्य तत्त्वज्ञानमयत्वमेव स्फुटीभवति। इत्यनेन प्रकारेण साङ्ख्यस्य व्युत्पत्तिः स्वीक्रियते, साङ्ख्यदर्शने पञ्चविंशतितत्त्वानां परिगणना ईश्वरकृष्णस्य साङ्ख्यकारिकायामुल्लिखिता। तद्यथा–

**मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।**
**षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः॥**[1]

अस्मिन् श्लोके तत्त्वानि मूलरूपेण चत्वारि प्रकृतिः, विकृतिः, उभयात्मिका, न प्रकृतिर्न विकृतिरिति। अन्ये प्रभेदास्तेषामेव चतुर्ण्णां विकारास्ते यथा–

1. **प्रकृतिः**– प्रकृतेरपरं नाम प्रधानः, अव्यक्तः, प्रकृतिश्च संख्यायामेका एव।

2. **विकृतिः**– पञ्चज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि, मनः, पञ्चमहाभूतानि चाहत्य षोडशसंख्यकेयं विकृतिः।

3. **प्रकृतिविकृतिः**– (उभयात्मिका)– महत्तत्त्वम्, अहंकारः, पञ्चतन्मात्राः, (शब्द–स्पर्श–रूप–रस–गन्धश्च) चाहत्य सप्तसंख्यका।

4. **न प्रकृतिर्न विकृतिः**– पुरुषः एकः।

साङ्ख्यदर्शनस्य प्रथमल्लक्ष्यमाध्यात्मिकम्, आधिभौतिकम्, आधिदैविकञ्चैति त्रिविधदुःखानाम् आत्यन्तिकरूपेण निवृत्तिरेव। साङ्ख्येन तत्त्वज्ञानेनैव दुःखनिवृत्तिर्भवति। अनेन सिध्यति यत् ज्ञानेनैव मुक्तिर्भवतीति, अज्ञानेन प्रकृतिपुरुषयोः संयोगो भवति। यावद् विवेकख्यातिर्नैव भवति तावत् कैवल्यप्राप्तिः भवितुन्नैव शक्यते।

सांख्यदर्शने यानि पञ्चविंशतितत्त्वानि वर्णितानि तेष्वेवैकं तत्त्वं प्रकृतिस्वरूपकमस्ति। सप्ततत्त्वानि प्रकृतिविकृतिस्वरूपाणि वर्तन्ते, षोडशतत्त्वानि केवलं विकारस्वरूपाणि स्वीक्रियन्ते, एकतत्त्वमनुभवस्वरूपं वर्तते, एतानि पञ्चविंशतितत्त्वानि निगदितानि, सृष्टिक्रमोऽत्र सुविस्तृतरूपेण साङ्ख्यकारिकायां दृश्यते।

प्रकृतिपुरुषयोः संयोगात् सृष्टिः भवति। प्रकृतौ क्रियाशक्तिर्वर्तते। किन्तु चेतनत्वं नास्ति पुरुषे च चेतनत्वं वर्तते क्रियाशक्तिर्नास्ति। पङ्गबन्धवदुभयोः संयोगात् सर्गः प्रभवति। इदमत्राकूतं यत् पुरुषस्य चेतनत्वं प्रधानस्य क्रियावत्वम् च परस्परमपेक्षेते। पुरुषः प्रकृतिं द्रष्टुं प्रकृतिस्थ तं विमोचयितुम् इच्छति तेनैव तयोः संयोगः संयोगाच्च सर्गो भवति।

उक्तञ्च कारिकायाम्–

1. सांख्यकारिका, 3

**पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।**
**पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः[1]॥**

पुरुषस्य प्रधानेन सह संयोगो दर्शनार्थम्। प्रकृतिं महदादिकार्यं भूतपर्यन्तं पुरुषः पश्यति प्रधानस्यापि पुरुषेण सह संयोगः कैवल्यार्थम्। स च एतदर्थं, संयोगः पङ्ग्बन्धवदुभयोरपि द्रष्टव्यः। यथा एकः पङ्गुरेकश्चान्धः, एतौ द्वावपि गच्छन्तौ महता सामर्थ्येनाटव्यां सार्थस्य स्तेनकृतादुपप्लवात् स्वबन्धपरित्यक्तौ दैवादितश्चेतस्य चेरतुः। स्वगत्या च तौ संयोगमुपयातौ। पुनस्तयोः स्ववचसोर्विश्वस्तत्वेन संयोगो गमनार्थं दर्शनार्थं च भवति। अन्धेन पङ्गुः स्कन्धमारोपितः, एवं शरीरारूढपङ्गुदर्शितेन मार्गेणाऽन्धो याति, पङ्गुश्चाऽन्धस्कन्धारूढः। एवं पुरुषे दर्शनशक्तिरस्ति, पङ्गुवत् न क्रिया, प्रधाने क्रियाशक्तिरस्त्यन्धवत् न दर्शनशक्तिः। यथा वाऽनयोः पङ्ग्वन्धयोः कृतार्थविभागो भविष्यतीप्सित-स्थानप्राप्तयोः एवं प्रधानमपि पुरुषस्य मोक्षं कृत्वा निवर्तते, पुरुषोऽपि प्रधानं दृष्ट्वा कैवल्यं गच्छति, तयोः कृतार्थयोर्विभागो भविष्यति। किञ्चान्यत्-तत्कृतः सर्गः तेन संयोगेन कृतस्तत्कृतः, सर्गः=सृष्टिः। यथा स्त्री-पुरुषसंयोगात् सुतोत्पत्तिस्तथा प्रधानपुरुषं संयोगात् सर्गस्योत्पत्तिः।

**प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः।**
**तस्मादपि षोडशकात्पञ्चभ्यः पञ्चभूतानि॥[2]**

अर्थात् यानि यानि तत्त्वानि संसारे दृष्टानि भवन्ति, तानि सर्वाणि अस्माभिः दृश्यन्ते। 'व्यक्ताव्यक्तज्ञविज्ञानात्' अर्थात् प्रकृतेः यानि तत्त्वानि समुद्भूतानि तानि सम्यक्तया ज्ञातव्यानीति सिद्धान्तः। तथा च सांख्यशास्त्रे ये खलु सिद्धान्ताः प्रतिपादिताः सन्ति। त एव सिद्धान्ताः संक्षेपेण इह प्रस्तूयन्ते। अत्र कार्यकारणभावः, सत्कार्यवादः, परिणामवादः, पुरुषबहुत्ववादः, पुरुषस्य स्वरूपम्। प्रकृतिस्वरूपम्, गुणाः, प्रकृतिपुरूषसंयोगः, जीवन्मुक्तिः, विदेहमुक्तिश्च। एषां सिद्धन्तानां मुख्यतया प्रतिपादनं विद्यते।

अस्य प्राचीनतमस्य दर्शनस्य प्रभावः न केवलं दर्शनेषु अपितु पुराणमहाभारतादिषु प्रायशः अस्त्येव। महाभारतस्य उद्योगपर्वणि सनत्सुजातेन धृतराष्ट्रं प्रति सांख्यशास्त्रीयतत्त्वानां यथा श्वेताश्वेतरोपनिषदि[3] "**अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां स्वरूपाम्**"[4] इत्यादिना उपदेशः वर्तते। अतः अनेन वक्तुं शक्यते सांख्यदर्शनं न केवलं प्राचीनतमं दर्शनम्, अपितु अन्येषां दार्शकिनसम्प्रदायानाम् उपकारकत्वेन अत्यन्तं महत्त्वपूर्णमपि विद्यते इति।

**निष्कर्षः**- इदं वक्तुं शक्यते यस्मिन् काले दर्शनक्षेत्रेषु विभिन्नानि मतानि समुद्भूतानि। न तत्समये सांख्यशास्त्रस्य प्राचीनत्वं दृग्गोचरति यच्छास्त्रैः प्रकृतेः सृष्टिप्रक्रियायाश्च व्याख्या सुविस्तृता। अव्यक्तात् महत्तत्त्वं समुत्पद्यते, एष प्रथमः पृथिवीतत्त्वञ्चेति। एष प्रथमः प्रकृतेश्च सर्गः इति कथयन्ति विद्वांसः। अव्यक्तम्, महान् अहङ्कारः, पञ्चतन्मात्राणि च साङ्ख्यदर्शने अष्टौ प्रकृतयः

1. सांख्यकारिका, 21
2. सांख्यकारिका 22
3. कठोपनिषदि 1/2/12
4. सांख्यतत्त्वकौमुदी पृष्ठ 02

सन्ति। महाभारते यत् आकाशादि पञ्चसूक्ष्मभूतानि द्योतकानि तानि साङ्ख्यदर्शने पञ्चतन्मात्राणि व्यपदेश्यानि भवन्ति।[1] प्रकृतिः कस्यचिद् वस्तुनो ज्ञानमकलयते, एतद् विपरीतं पुरुषः स्वभावतः एव ज्ञानवान् भवति, प्रकृतिः अचेतना विद्यते इति ज्ञायते, क्षरत्वात् सा प्रकृतिः अन्यः कश्चिदपि भवितुं नैवार्हति, परं पुरुषः नित्योऽक्षरश्चेतनश्चास्ति।[2]

अव्यक्ता प्रकृतिः सगुणा अस्तीति प्रोच्यते, पुरुषश्च निर्गुणः इत्थमेव विरूपोऽत्र प्रकृतिरिरिति बोद्धव्यम्, भिन्नश्च पुरुषः।[3] ज्ञानशब्देनैव प्रकृतिः प्रतिपाद्यते निष्कलो ह्यात्माचेह ज्ञेयो प्रोच्यते। एवमेव अजा प्रकृतिर्वर्तते, तस्याः भिन्नः निष्कलश्च पुरुषः ज्ञाता समुदीर्य्यते।[4]




1. अव्यक्ताच्च महानात्मा समुत्पद्यति पार्थिव।
प्रथमं सर्गमित्येतदाहुः प्राधानिकं बुधाः।। म.भा.शा.प.अ. 310 श्लो. 12
2. अव्यक्तस्तु न जानीते पुरुषो ज्ञः स्वभावतः।
न मत्तः परमोऽस्तीति नित्यमेवाभिमन्यते।। म.भा.शा.प.अ. 315 श्लो. 4
3. अव्यक्तं प्रकृतिं प्राहुः पुरुषोऽस्ति च निर्गुणम्।
तथैव भिन्नपुरुषं विरूपणं प्रकृतिं तथा।। म.भा.शा.प.अ. 318 श्लो. 39
4. ज्ञानं तु प्रकृतिं प्राहुर्ज्ञेयं निष्कलमेव च।
अज्ञश्च ज्ञश्च पुरुषस्तस्मान्निष्कलं उच्यते।। म.भा.शा.प.अ. 318 श्लो. 40

ISSN - 0974-8946 **शोधप्रभा**
**जनवरी-मार्च 2018** वर्षः 43, द्वितीयाङ्कः

# ब्रह्मसिद्धान्त में रसभेदविमर्श

**डॉ. सुन्दरनारायणझा***

सर्वविदित है कि जगत् का मूल कारण ब्रह्म है। ब्रह्म के स्वरूप कहे गये हैं- शब्दब्रह्मात्मक एवं परब्रह्मात्मक। शब्दब्रह्मात्मक ऋगादि वेदों में परब्रह्म के मूलस्वरूप का यथार्थ प्रतिपादन किया गया है। ऋगादि वेदों में मुख्य रूप से चार विषय विभाग हैं- **यज्ञ, विज्ञान, इतिहास और स्तोत्र।** वेदादि शास्त्र के मर्मज्ञ विद्वान् पूज्यपाद श्रीमधुसूदन ओझाजी ने इन चारों विषयों का निरूपण अलग-अलग ग्रन्थों द्वारा किया है। यज्ञ का निरूपण **यज्ञमधुसूदन** में, इतिहास का **पञ्चख्याति** में, स्तोत्रों का निरूपण **ब्रह्महृदय** में तथा ब्रह्मविज्ञान का निरूपण **ब्रह्मसिद्धान्त** में किया है।

यहाँ यह स्पष्ट करना अत्यन्त आवश्यक है कि आदरणीय ओझाजी शङ्कर, रामानुजादि की तरह अपना कोई नया सम्प्रदाय नहीं बनाये हैं, अपितु वेदार्थ की परिपाटी जो कालवश विद्वानों से दूर हो गई थी उस ओर विद्वानों का ध्यान आकृष्ट करने का यत्नमात्र किये हैं। इसीलिए आपने मन्त्रों, ब्राह्मणों व उपनिषदों पर कोई नया भाष्य नहीं लिखा। अतः उन्होंने ग्रन्थप्रयोजन के सन्दर्भ में स्पष्ट किया है कि-

**आलस्यजाज्ञानतमोझरेणातिवाहितं ब्राह्मणं वेदतत्त्वम्।**
**मनः समुद्रे प्रतलावगाहादन्वेषितुं तत् क्रियते प्रयत्नः॥5॥**

**विशालविज्ञानमिदं पुरा युगे मनीषिदेवर्षिवरैः प्रवर्तितम्।**
**शाखाप्रशाखाभिरनेकभेदवत् कार्त्स्न्येन विज्ञातुमलं न शक्यते॥6॥**

**यथोदितं ब्राह्मणवेदशास्त्रे क्वचित्स्फुटं वा क्वचिदस्फुटं वा।**
**सर्वा तमर्थं नवयुक्तियोगाद् विलक्षणं सम्प्रति लक्षयामि॥7॥**

इस प्रकार आपने स्पष्ट कहा है कि प्रत्येक शास्त्र में एक नियत परिभाषा रहती है, उसे जाने बिना शास्त्र का मर्म जानना सबके लिए कठिन होता है। उसी प्रकार वेदार्थ जानने की भी कुछ परिभाषाएँ हैं, जो आज कालवश विस्मृत हो गई हैं, इसी से वेदार्थ में अनेक विवाद-प्रसङ्ग उठ रहे हैं। उन परिभाषाओं का स्फुटीकरणमात्र कर रहा हूँ, जिन्हें समझ लेने पर उपलभ्यमान वेदभाष्य से

* सहायकाचार्यो वेदविभागे, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली-16

ही सबकुछ मिल सकता है, नये भाष्य की आवश्यकता नहीं।

उक्त आशय द्वारा श्रीमान् ओझाजी की दृष्टि सम्पन्न हुई। उस क्रम में ब्रह्मविज्ञान सम्बन्धी तथ्यों के प्रकाशनार्थ **ब्रह्मसिद्धान्त** ग्रमक ब्रन्थ नासदीयसूक्त के दस वादों पर आधारित हमारे सामने प्रस्तुत है। व्याख्यानशीर्षक के अनुसार **ब्रह्मसिद्धान्त में रसभेदविमर्श** की ओर मैं श्रोताओं का ध्यान आकृष्ट करना चाहता हूँ।

वेद में ब्रह्म को **रस**[1] कहा गया है। वस्तुतः रस शब्द के दो अर्थ प्रसिद्ध हैं आनन्द को भी रस कहते हैं और जल को भी। विकास आनन्द का लक्षण है और मूलतत्त्व का विकास ही जगत् रूप में होता है, इसलिए आनन्दरूप होने से रसशब्द का प्रयोग वहाँ सुसंगत है। जल में जिस प्रकार लहरें उठती हैं और उसी में लीन हो जाती हैं उसी प्रकार मूलतत्त्व में संसाररूप लहर उठकर उसी में लीन हो जाती है। इस जल के सादृश्य से भी उसे रस कहना युक्ति युक्त है।

ब्रह्म के स्वरूप का प्रतिपादन करती हुई श्रुति कहती है–

**तदेजति तन्नैजति तद्दूरे तद्वन्तिके। तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः।**[2] जैसा कि हम जानते हैं– यह समस्त प्रपञ्च (विश्व) उस ब्रह्म का ही विस्तार है। इसलिए **सर्वं खल्विदं ब्रह्म**[3] यह श्रुति का उद्घोष है। अर्थात् जगत् में जितने भी पदार्थ हैं उनमें स्थिरता और गति दोनों प्रतीत होता है। इसलिए उनका मूलतत्त्व भी ऐसा ही होना चाहिए जिसमें स्थिर और चल दोनों रूप हों। ब्रह्म में रस एवं बल दोनों तत्त्वों की उपस्थिति है। जैसा कि श्रुति कहती है– **बलं वै ब्रह्म**[4] ब्रह्म वै ब्रह्म[5] इति। उन दोनों में रस सदा एकरूप होने के कारण स्थिर और बल अनेकरूप होने से गतिशील है। बल का प्रस्फुटित रूप क्रिया है जो सदा परिवर्तित होती हुई षड्भावविकार का अनुसरण करती है, अन्त में विनष्ट भी हो जाती है। इस प्रकार जगत् क्रिया के विजृम्भणरूप में दृश्य है। इस क्रिया का तथा क्रिया के विजृम्भणत्व का कोई आधार तो अवश्य मानना पड़ता है। वह आधार क्रिया से अवश्य विलक्षण होगा। उसी आधार का नाम ब्रह्म, रस इत्यादि है। ये रस और ब्रह्म यद्यपि दोनों निर्धर्मक हैं, अर्थात् इनमें किसी अन्य धर्म की सत्ता नहीं है, किन्तु दोनों के मिलने पर जो विशिष्ट रूप बनता है उसमें ये दोनों धर्मरूप से प्रविष्ट हो जाते हैं।

रसस्वरूप ब्रह्म की अभिन्न पराशक्ति को बल कहा जाता है। परब्रह्म में जो अर्थ **पर** का है, वही पराशक्ति में **परा** का अर्थ है। यह पराशक्ति यद्यपि रस से भिन्न नहीं है। अत एव वेद में अद्वैत का प्रतिपादन भी किया गया है। श्वेताश्वतरोपनिषद् में कहा गया है– **न तस्य कार्यं**

1. रसो वै सः –तै.आ.–8/7/1, वेदपुरुष इति यमवोचाम, येन वेदान्वेद ऋग्वेदं यजुर्वेदं सामवेदमिति, तस्यैतस्य ब्रह्म रसः। शां.आ. – 8/3
2. शु.य.सं.– 40/5
3. छां.उप.– 3/11/1
4. तैत्तिरीयब्राह्मण– 3/8/5/2
5. मै. 2.3.5 ; 4.4.2 ; काठ – 11/4, जै.प्रा. 1.202 ; 3.303

**करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च।।**[1] अर्थात् ब्रह्म न स्वयं कुछ करता है, न ही किसी का साधन बनता है, न कोई ब्रह्म के समान है और न कोई उससे बड़ा है। अनन्तरूपमयी इस ब्रह्म की सहज स्वाभाविकी पराशक्ति वेदों में विवृत (वर्णित) है। ज्ञान-बल और क्रिया ये उस शक्ति के व्यावहारिक रूप हैं। उसी शक्ति को बल कहा गया है।

ग्रन्थकार कहते हैं कि माया की प्रसुप्तावस्था को बल कहते हैं। कार्यार्थ कृतसङ्कल्प अवस्था में जागरित हो जाने पर बल को शक्ति कहा जाता है। संसार की सम्पूर्ण क्रियारूप चेष्टा शक्ति का ही परिणाम है। इस प्रकार एक बल की तीन अवस्थाएँ **बलशक्ति और क्रिया** बन जाती है।

रस और बल ये दोनों धर्म हैं। इस धर्म को धारण करने वाला ब्रह्म धर्मी है। धर्मी का कोई रूप नहीं होता, वह धर्म के विविध रूपों द्वारा ही अभिव्यक्त होता है। अत एव ब्रह्म का कोई रूप नहीं कहा गया, वह अरूप है तथा विरूप भी है। अर्थात् सर्वरूप है।

ब्रह्म के रस धर्म के तीन अपरिवर्तनशील धर्म- **सत्ता, चेतना एवं आनन्द** हैं। बलधर्म के भी- **नाम, रूप और क्रिया** ये तीन धर्म कहे गये हैं जो सदा परिवर्तनशील हैं। तात्पर्य यह है कि बल अणुस्वरूप है, तथा रस परमाणुस्वरूप। रस के बिना बल की स्थिति अकल्पनीय है। जिस प्रकार जलमय रस के न मिलने पर वृक्ष का जीवन नहीं रह पाता, वैसे ही सर्वमूलभूत आनन्द स्वरूप रस के बिना बल भी जीवित नहीं रह सकता। अबतक रस एवं बल के स्वरूप पर चर्चा हुई, अब रस के भेद पर कुछ चर्चा की जाती है-

## रसभेदविमर्श

वह आनन्दस्वरूप रस यहाँ दो प्रकार का है- एक **शान्त्यानन्द (परमानन्द),** दूसरा **समृद्ध्यानन्द।** बल में रस के प्रविष्ट हो जाने पर क्षणिक प्रसन्नता का उदय जहाँ होता है वह **समृद्ध्यानन्द** कहलाता है। यह मन की वृत्तियों के अनुरूप है, तथा सबके प्रत्यक्ष अनुभव में आने योग्य है। पाप्मा कहा जानेवाला बल जब रस में लीन हो जाता है- वहाँ बल की चेष्टा समाप्त हो जाती है, अकेला रस ही रहता है, यह परम आनन्दमय अवस्था ही **शान्त्यानन्द** नाम से प्रसिद्ध है। इसका अनुभव समाधि अवस्था में अथवा सुषुप्ति (स्वप्न रहित गहन निद्रा) में होता है। इस विषय में ग्रन्थकार का मत है-

**द्विधाऽयमानन्द इहास्ति पाप्माप्रसङ्गतो या परमस्ति शान्तिः।**
**स एव मुख्योऽथ रसप्रवेशान्मृत्यावुदेति क्षणिकः प्रसादः।।**[2]

1. श्वेताश्वतरोपनिषद्- 6/8
2. ब्रह्मसिद्धान्त- रसभेदाधिकरण, श्लोक-202, पृष्ठ-248

तात्पर्य यह है कि रस का आधार पाकर ही बल की सत्ता बनती है। अतः स्वभावतः नित्य सत्ता शून्य बल का प्रतिष्ठापक रस ही होता है। इसी कारण रस को अमृत और क्षणभङ्गुर बल को मृत्यु कहा जाता है। मृत्युरूप बल अमृतरूप रस में लीन हो जाता है, अतः अमृत को लिङ्ग कहा जाता है। कर्मरूप मृत्यु अमृत से मिश्रित होती है अतः संश्लेषवश कर्म को योनि माना जाता है।

मृत्युमय कर्म की जब अमृत में स्थिति होती है तो कर्म भी अमृत के भूमा भाव से संश्लिष्ट होकर परिपूर्ण हो जाता है। यह कर्म की परिपूर्ण एक अवस्था है, अर्थात् जहाँ कर्म अमृत भाव से शून्य रहता है, वहाँ भी कर्म पूर्ण नहीं है ऐसा नहीं माना जाता- वहीं वह (कर्मरूप बल) रस में लीन हो जाने से पूर्णता को खो नहीं देता प्रत्युत् जैसे सृष्टि हो जानेपर भी आकाश अपनी पूर्ण अवस्था में ही रहता है, वैसे ही वह भी पूर्ण ही रहता है। इसी सन्दर्भ में उपनिषच्छ्रुति कहती है-

**पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥**

अर्थात् सृष्टि से पूर्व अमृतमय रस पूर्णभाव में है, वह सृष्टि में भी पूर्ण ही है, उस पूर्ण में से आगे भी पूर्ण का ही उदय होता है- अतः वह उदित भी पूर्ण ही है। यदि पूर्ण के पूर्णभाव को परितः ग्रहण कर लिया जाय तो अन्त में जो बचेगा वह पूर्ण ही होगा।

वह पूर्णभाव सम्पन्न अमृतमय रसात्मक ब्रह्म, सांसारिक बलजनित कर्मों से सदा निर्लिप्त रहता है, तथापि रस के संयोग होने पर ही बल कर्म में प्रवृत्त होता है, इस भाव से रस के बिना कर्म की उत्पत्ति नहीं, यह कहना अनुचित नहीं होगा। अतः ब्रह्म का लौकिक सम्बन्धाभाव होने पर भी उससे कोई विलक्षण सम्बन्ध तो मानना ही होगा। इस सन्दर्भ में ओझाजी कहते हैं-

**नानाविधाः कर्मणि तत्र कर्मणः संसर्गभेदाः प्रभवन्ति ये यथा।**
**न तैस्तथा हन्त भवन्ति कर्हिचित्कर्माण्यकर्मण्यपि योजितानि हि॥**[1]

अर्थात् संसार में ऐसा देखा जाता है कि एक कर्म में अन्य कर्म के सम्बन्ध नाना प्रकार से भिन्न-भिन्न होते हैं, किन्तु वे सारे लौकिक सम्बन्ध ब्रह्म तथा कर्म के नहीं हो सकते। फिर भी अकर्मरूप अमृतमय ब्रह्म में कर्म संश्लेष होता ही है, अतः यहां अन्य विलक्षण सम्बन्ध ही मानना चाहिये।

ओझाजी के कहने का तात्पर्य है कि रस के आधार पर ही बल की स्वरूप सत्ता बनती है। रस के बिना बल का कोई स्वरूप नहीं है। इस कारण ही बल को **आसञ्जन** (आधार पाकर रहने वाला) कहते हैं। रस को किसी प्रकार के सम्बन्ध की कोई अपेक्षा नहीं होती, न ही उसमें सम्बन्ध का कोई फल होता है। रसमयब्रह्म तो सदा स्वतन्त्र है। बल उत्पन्न होता है और विलीन हो जाता है। उस बल की उत्पत्ति से रस की कोई वृद्धि नहीं होती, और न ही बल के विलीन

1. ब्र.सि. संसर्गाधिकरण, श्लोक-87, पृष्ठ-57

होने पर रस की कोई हानि होती है- इसलिए रस को **निरञ्जन** कहा जाता है। वह कर्म सम्बन्ध से तटस्थ ही रहता है, किन्तु कर्मविशिष्ट रस में जो अन्य कर्म का सम्बन्ध होता है, वही रस में स्थिति पाये हुए कर्म का अन्य कर्म से सम्बन्ध है। यह लोक सम्बन्ध रस में नहीं होते हुए भी बल के रस से युक्त होने पर कर्म की प्रवृत्ति इस तथ्य को स्पष्ट करता है कि रस का कर्म से कोई न कोई सम्बन्ध तो है ही। जबकि लोक में जो सम्बन्ध हैं वे कर्म का अन्य कर्म से सम्बन्ध है। इस प्रकार रस के कर्म से साक्षात् सम्बन्ध न होते हुए भी अवान्तर सम्बन्ध होते हैं। इन्हीं सम्बन्धों के आधार पर रस के भेद का अनुभव होता है।

जगत् में व्यावहारिक अवस्था में कर्म का सम्बन्ध पाँच प्रकार का माना जाता है- (1) स्थानावरोध, (2) समञ्जस, (3) ऐकात्म्यरूप, (4) एकभाव्य और (5) भक्ति। जहाँ जगह रोक ली जाय वह स्थानावरोध, साथ रहना समञ्जस, एकरूप हो जाना ऐकात्म्य, मिलकर साथ-साथ सत्ता एकभाव्य तथा दूसरे का अंशरूप भाग बन जाना भक्ति कहलाता है।

1. **स्थानावरोध**- रस एवं बल के सम्बन्ध को इन पाँच प्रकारों के अन्तर्गत देखा जाता है, फलतः रस अखण्ड होता हुआ भी पाँच भेद में विभक्त समझा जाता है। ओझाजी ने कहा है कि- **आनन्द एवामृतमस्ति यस्मात् संसृज्य तस्माद्रसमेव मृत्युः। यावन्तमात्मानमुपैति तावानानन्द आत्मा विभवेषु तेषु॥ (ब्र.सि., रसभेदा., श्लोक-203, पृष्ठ-248)** अर्थात् आनन्द ही एकमात्र अमृत है, इस कारण मृत्युरूप ब्रह्म उससे संसर्ग करता है, वहाँ आत्मा रूप आनन्द का विभूति सम्बन्ध रहता है। तात्पर्य यह हुआ कि रस का आधार पाकर ही बल की सत्ता बनती है, उस रस में ही कई बलों का चयन होकर अधिक स्थान घेर लेता है। इस प्रकार अमृतस्वरूप रसमय आनन्द से मृत्युरूप बल संश्लिष्ट होकर जितने में अपने आपको रख पाता है अर्थात् सैकड़ों बलों के चयन से जितने प्रदेश को घेर कर व्याप्त होता है- उतने प्रदेश में ही विभूति संसर्ग से तरङ्गों में जल संसर्ग के समान रस का प्रवेश होता है, अतः उतना ही आनन्द का अनुभव मनुष्य कर पाता है। यह रस का बल के साथ स्थानावरोध-सम्बन्ध नामक रस का प्रथम भेद है।

2. **समञ्जस**- इन दोनों के एक दूसरे से मिश्रित होने की अवस्था **समञ्जस** कहलाती है। इस परस्पर सम्बन्ध में रस का व्यवहार आत्मारूप से होता है, और इसमें संचित बल रस के वैभव माने जाते हैं। विभूति सम्बन्ध से बल में रस का प्रवेश होने से विभव पद का व्यवहार किया गया है। रस स्वरूप आत्मा के महिमात्मक वैभव निदर्शन में सर्वप्रथम शरीर फिर वनिता, पुत्र, सुवर्ण, पशु, घर, हाथी, घोड़े, नौकर, चाकर आदि भृत्यवर्ग आत्मा के महिमारूप होते हैं। ये सब रस एवं बल के समञ्जस अर्थात् एक साथ रहने से संभव होता है। अतः यह रस का दूसरा भेद स्वीकार किया जा सकता है।

3. **ऐकात्म्यरूप**- आत्मा जबतक प्रजा वित्त आदि को ममता रूप से ग्रहण नहीं करता है, तबतक उनमें आत्मा का विभूति सम्बन्ध नहीं होता और न ही तत्सम्बन्धी तृप्ति होती है। जब उन सबको ममता पूर्वक अपने से सम्बद्ध रूप में जान लेता है तब उसमें आत्मा का विभूति सम्बन्ध

होता है और तब ही तृप्ति नाम से कहे जाने वाला आनन्द होता है। इसकी ममता प्रजा वित्तादि में जितनी बढ़ती है उतनी ही अधिक तृप्ति उदित होती है। यह समृद्ध्यानन्द का स्वरूप माना जाता है। अतः प्रजा वित्तादि विज्ञान[1] है, उसका रसरूप आनन्द के साथ एकरूपता सिद्ध होती है। अतः विज्ञान आनन्दरूप है, यह प्रसिद्ध है। चूँकि विज्ञान विस्तार का परिचायक है, इस प्रकार समृद्धि के विस्तार से आनन्द का अनुभव सहज है। फलतः यह ऐकात्म्यरूप नामक रस का तीसरा भेद हुआ।

4. **एकभाव्य**- आत्मा का परिचय अणु से भी अणुरूप तथा महान् से भी महानतम कह कर दिया गया है। यथा- **अणोरणीयान् महतो महीयान् आत्मा गुहायां निहितोऽस्य जन्तोः॥ (श्वेताश्वतरोपनिषद्- 3/20)** वह अणु महान् कैसे बनता है? इस प्रक्रिया को स्पष्ट करने के लिए ओझाजी कहते हैं-

**यतः स आत्मा विभवत्यमीभिर्देहप्रजापशुमेदिनीभिः।**
**सम्पद्यते तेन महानयं यत् स्वं वैभवं तन्महिना च संपत्॥**[2]

अर्थात् आत्मा देह-प्रजा-स्त्री-पशु-गज-अश्व आदि तथा बाग-बगीचे मकानरूप पृथ्वी आदि में विभूति संसर्ग से विकसित होता है, उससे महान् भाव में सम्पन्न हो जाता है। कथित देह आदि उसके वैभव, महिमा अथवा सम्पत्तिरूप कहे जाते हैं। सम्पत्तिरूप कथित पदार्थों में आत्मा का ममता भाव संयहित होता है- उससे आत्मा का अहंकार उन सबमें देखा जाता है। उनमें से किसी एक की भी हानि हो जाने पर आत्मा अल्प के समान प्रतीत होने लगता है, वही इसका दुःख माना जाता है। यह पदार्थों के साथ उसका एकभाव्य रस का चौथा भेद माना जा सकता है।

5. **भक्ति**- उपर्युक्त अंश हानि क्रम में जब एक-एक कला का विनाश होकर धन आदि अन्य के अधिकार में चले जाते हैं तब उस वैभव के अपनी महिमा से अलग हो जाने पर आत्मा दुःखी हो जाता है। इस प्रकार वैभव जो रस की आत्मा है, उसका विभाजन आरम्भ होने लगता है। यही विभाजन उसकी भक्ति है तथा महा आर्ति (आतं) रूप दुःख ही उसकी मृत्यु कहलाती है।

यह स्पष्ट है कि **षड्भावविकारा भवन्तीति वार्ष्यायणिः** अर्थात् वार्ष्यायणि आचार्य मानते हैं कि रस एवं बल के संयोग से निर्मित कर्मभाव में छः विकार स्वाभाविक ही होते हैं। ये विकार जगत् के प्रत्येक अंश में प्रतीत होते हैं। **जायतेऽस्ति विपरिणमते वर्द्धते अपक्षीयते विनश्यतीति** ये छः भावविकार निरुक्तकार के मत में हैं। अर्थात् सत्त्व की उत्पत्ति का क्रम, उत्पन्न होकर उसका सत्ता में रहना, परिवर्तित होना, वृद्धि होना, ह्रास होना, अन्त में नष्ट हो जाना। ये विकार बलजनित उत्पन्न कर्म में स्वतः विद्यमान होते हैं।

1. विज्ञान का लक्षण ओझाजी ने इस प्रकार किया है- एकस्मादनेकस्मिन्नारोहणं यज्ञः। यज्ञविज्ञानं वेदः। श्रुति कहती है- विज्ञानं यज्ञं तनुते। तै.आ.-8/5/1
2. ब्रह्मसिद्धान्त- श्लोक- 208

समस्त पदार्थों की सत्ता रूप से एकता और विज्ञान भेद से भिन्नता होती है। लोक में जिसकी सत्ता होती है उसकी ही प्राप्ति होती है, और जो कुछ ज्ञान रूपेण पाया जाता है उसकी यहाँ सत्ता मानी जाती है। सत्ता की सिद्धि भाँति अर्थात् ज्ञान से ही होती है। अतः सत्ता भाँति सिद्ध है। इसी प्रकार जिसकी सत्ता होती है उसी का ज्ञान भी होता है, असत् का ज्ञान नहीं होता, अतः भाति भी अस्तिसिद्ध होती है। इस सत्ता और उपलब्धि से ही रसरूप आनन्द प्राप्त होता है। इस प्रकार सत्ता, ज्ञान और आनन्द एकत्र अविनाभाव से रहते हैं।

ब्रह्मसिद्धान्तकार ने सत्ता, ज्ञान एवं आनन्द को प्रतिष्ठा, ज्योति और विधृति रूप कहा है। चूँकि प्रतिष्ठा सत्ता का द्योतक, ज्ञान चेतना का और आनन्द विधृति का द्योतक है। यद्यपि इन तीनों में परस्पर कोई भेद नहीं है, अपितु एक ही तत्त्व तीन रूपों में विभक्त हो जाता है। ओझाजी ने कहा है-

**रसो प्रतिष्ठावशतः पृथक्त्वं क्वचित्तु विज्ञानवशात्पृथक्त्वम्।**
**क्वचित्पुनः स्यादुभयोः पृथक्त्वाद्रसे पृथक्त्वं तदिदं निरुह्यम्।।**[1]

तात्पर्य यह है कि सत्ता, चेतना और आनन्द ये तीनों धर्म अमृत अर्थात् नित्य हैं, ये तीनों कभी एक दूसरे के बिना नहीं रहते इसलिए अभिन्न कहे जाते हैं। प्रत्यक्षज्ञान में भेद के कारण विविधता भी देखी जाती है। कारण अमृत नाम का रस सब में अनुस्यूत रहता है और वह एक है उसी के कारण सब एकरूप हैं। मृत्यु नाम का बल नाम, रूप और क्रिया स्वरूप होता है। वह सर्वत्र नानाभाव में ही नृत्य करता है- उसका ही किया हुआ यह नानाभाव है। यही तात्पर्य है।

**जयन्तु वेदाः।**

1. ब्रह्मसिद्धान्त- 218, पृष्ठ-255

ISSN - 0974-8946 **शोधप्रभा**
**जनवरी-मार्च 2018** वर्षः 43, द्वितीयाङ्कः

# कला एवं योग की परस्पर-निर्भरता

**डॉ. पूजा मिश्रा***

प्रस्तुत लेख का उद्देश्य कला और योग की परस्पर निर्भरता के सैद्धान्तिक आधारों की व्याख्या करना है। कला योग के लिए और योग कला के लिए आवश्यक है- ऐसी सामान्य अवधारणा है और इसके सन्दर्भ भी स्थान-स्थान पर मिलते हैं, पर इस तथ्य को सिद्धान्त रूप में स्थापित नहीं किया गया है। आनन्दकुमारस्वामी ने इस क्षेत्र में विस्तृत कार्य की सम्भावना को व्यक्त किया है।[1] शास्त्रों एवं साहित्य में उपलब्ध तथ्यों और सन्दर्भों के आधार पर इन दोनों विधाओं की पारस्परिकता का आलोचन यहाँ किया जा रहा है। यहाँ कला का तात्पर्य उस कला सामान्य से है जो सभी कला विधाओं में निहित है और जिसके कारण ये कला नाम से अभिहित की जाती है।

भारतीय विद्वत् परम्परा में भिन्न-भिन्न विधाएँ मनुष्य के परम पुरुषार्थ की प्राप्ति को अपना लक्ष्य घोषित करती हैं, किन्तु दर्शन के भिन्न सम्प्रदाय, काव्यशास्त्र, साहित्य, नाट्यशास्त्र ये सब मनुष्य के अन्तिम साध्य की प्राप्ति के लिए भिन्न-भिन्न साधनों का सहारा लेते हैं। भरतमुनि ने कला के स्वरूप, प्रकार और इसके महत्त्व का विश्लेषण करते हुए परमानन्द (मोक्ष) को मानव का परम पुरुषार्थ बताया तथा कला को इस हेतु साधन माना। वहीं दूसरी ओर महर्षि पतञ्जलि ने योग को मोक्ष रूपी साध्य को सिद्ध करने में साधन घोषित किया। अतः उनके दृष्टिकोणों में पर्याप्त साम्य दृष्टिगत होता है।

कला सदैव योग आधारित है, अयोगी न तो कला का चिंतन कर सकता है, न ही अनुसंधान कर सकता है और न तो प्रस्तुतीकरण ही कर सकता है, क्योंकि कला के जितने भी अनुसंधान हुए हैं उनमें कला एवं योग की अद्भुत समरसता है यथा- अध्यात्म में ब्रह्मसूत्र भी अध्यात्मवाद का कलात्मक प्रस्तुतीकरण है। कला विषयक अवधारणा का आधार शैव, बौद्ध और वेदान्त के दार्शनिक सिद्धान्त हैं। ब्रह्मसूत्र में ही **रूपोऽपन्यासाच्च**[2] सूत्र की व्याख्या में निम्बार्काचार्य ने ब्रह्म में भी रूप की कल्पना की है।[3] ब्रह्मसूत्र में ही यह भी बताया गया है कि

---

* सहायक आचार्या, संस्कृत विभाग, माता सुन्दरी महिला महाविद्यालय, दिल्ली विश्वविद्यालय, दिल्ली-110002

1. Art as Yoga, a subject sufficient in itself for a whole volume. The Dance Of Shiva, pg. 25
2. ब्रह्मसूत्र, 1.2.24
3. अग्निमूर्द्धेत्यादिना परमात्मनो रूपन्यासाच्च नेतरो। वेदान्तपारिजातनिम्बार्काचार्य ब्रह्मसूत्र, 2.1.24 की व्याख्या

